रोदासमोजः प्रजायैत्वस्यै यदशिक्ष इन्द्र ॥ ११ ॥

न्वयः अत्र रोदस्युद्वेजकदासक्षपणकमुचितं प्रजाशिक्षकत्वं मुख्यं रामादन्यत्र भगवदवतारांतरेनास्ति यद्वाभिषेकानंगीकारात् इन्द्रे चासकृत्पराभवदर्शनान्नमुख्यं मघवत्त्वं श्रुतिप्रसिद्धेन्द्रशब्दार्थभागित्वं चास्ति अतो नान्यपरो मंत्रः किं चात्रतांसु ते कीर्तिमित्यारभ्य स्वां प्रजां बृहदुक्थो महित्वावरेष्वदधादापरेष्वित्यंतानामेकविंशतिमंत्राणां उपक्रमपरामर्शोपसंहारेषु रामलिंगान्येव दृश्यंते तत्रोपक्रमोव्याख्यात एव उपसंहारेपि बृहदुक्थो महाकर्मा रामः स्वां प्रजां संतानरूपां च महित्वा स्वप्रभावेनालौकिकेन क्रमादवरेषु भूस्थानेषु आदधात् परेषुवैकुंठस्थानेषु च आदधादितिप्रजानां नेतृत्वं राम एव दृष्टं अत्र बृहदुक्थ ऋषिः प्रत्यगभिन्नस्य रामस्य कर्माण्यात्मन्यारोप्य वदति अहं मनुरभवं सूर्यश्चेत्यादि वामदेववत् अन्ये चात्रमप(?)स्थामंत्राः कथाक्रमेण यथास्थानमेव व्याख्यास्यंते अध्यात्मं तु द्वय्याह प्राजापत्यादेवाश्चासुराश्चेति बृहदारण्यकादौ शमदमादिषु देवपदप्रयोगात् कामादिषु चासुरपदप्रयोगात् इत्थमस्यमंत्रस्यार्थः प्रत्येतव्यः सकलसंसारानर्थमूलात्कामाद्भीतैर्देवमनुष्यैः शरणीकृत ईश्वरः कामं हत्वा शमादींस्त्रातवान् मुमुक्षूंश्च सदाचार्यरूपेग तद्व्यवहारं शिक्षितवानितिदिक् ॥ ११ ॥

आह्वानं विवृणोति आसूर्य इति यत् क्षेत्रं शरीरं अस्य आगंतुः उर्विपाश्रेष्ठत्वेन अभिमतं दीर्घपाथे महति संसारमार्गे तत् सूर्यः सप्ताश्वः स्वसंतानरूपेणायातु सूर्यवंशे शरीरं धारयतित्रित्यर्थः तत्रापि रघुः रघुवंश्योभूत्वा श्येनः ईश्वरःपक्षी अंधो अच्छ अन्नमयं पिंडमभिमुखः पतयत् पततु सचयुत्राकविश्व

आसूर्यो यातु सप्ताश्वः क्षेत्रं यदस्योर्विपादीर्घपाथे रघुः ॥ श्येनः पतयदंधो अच्छायुवाकविर्दीदयद्गोषुगच्छन् ॥ १२ ॥ स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु ॥ चित्रः शिशुः परितमांस्यक्तून्प्रमातृभ्योधिक निक्रदद्गाः ॥ १३ ॥

सन् गोषु भूप्रदेशेषु गच्छन् संचरन् दीदयत् दीप्यतां रघुवंशे शरीरं धृत्वास्मानवात्वित्यर्थः पक्षे सूर्यवत्सर्वावभासकबोधरूपी श्येन ईश्वरः रघुः तद्धावतोन्यानत्येतीति श्रुत्यंतरात् शीघ्रगतिः नरं आयातु स च बोद्धाधीबलात् सनकादिवद्युवाकविश्वसन् लोकाननुगृह्णातु सप्ताश्वत्वं तु यमनि-यमासनप्राणायामप्रत्याहाराख्याः पंच धारणाध्यानसमाध्यात्मकः संयमः षष्ठः प्राणायामः प्रत्याहारो

ध्यानं धारणा तर्कः समाधिः षडंगा इति मैत्रायणीयश्रुतेस्तर्कश्चोपसंहार्य इति सप्तअश्वा आगमनसाधनानि यस्य स सप्ताश्वः शेषं प्राग्वत् ॥ अत्रापि आशृण्वतीण्य इति आज्ञाकारी समुद्र इति तन्नियंतृत्वमनंतरमंत्रे श्रुतं रघुपदसमुच्चितं रामे एव दृष्टं । नान्यत्रागस्त्येऽन्यत्र रघुवंश्ये वा इति दाशरथिपरत्वमेवास्यमंत्रस्यावसेयं ॥ १२ ॥ एवं प्रार्थितस्येश्वरस्य वह्निरेव शरीरत्वं गत इत्याह ॥ सजात इति । हे अग्ने त्वं रोदस्योर्द्यावापृथिव्योरेव मध्ये न तु मातापित्रोः शरीरे शुक्रशोणितरूपेण गर्भोजातोसि ॥ यतः ओषधीषु आग्नेयचरुरूपासु बिभृतः मंत्रविद्भिर्धृतः चारुः सुंदरः चित्रोनेकाश्चर्यमयः शिशुः तमांस्यक्तून् तमोमयीर्मोहरात्रीः परिमोहहीनः परिरत्नवर्जनार्थः चरुरूपी शिशुः मातृभ्यः कौशल्यादिभ्य एताः प्राप्य ॥ अधिकनिक्रदत् आह्वयन् प्रप्रकर्षेण अधिगाः अधिगतवानसि कर्मसंभृतचरुप्राशनमात्रादेव गर्भधारणोक्तेरलौकिकं रामस्य जन्मेति दर्शितं अत्रापि भद्रो भद्रया सचमान आगात्स्वसारंतारो अभ्येति पश्चात् ॥ सुप्रकेसैर्द्युभिरग्निर्वितिष्ठन्नुशद्भिर्वर्णैरभि राममस्थादिति षोडशे मंत्रे लिंगदर्शनात् बहुमातृकत्वसमुच्चितो रामशब्दो नैकमातृके जामदग्न्ये द्विमातृके वासुदेवे वा समवेति दाशरथिपरएवायं प्रघट्टकः तत्रापि कतिपये मंत्राः

कथोपयोगिनो यथास्थानमेवोदाहृत्य व्याख्यास्यंते। पक्षेऽग्निर्विज्ञानधातुः स हि इष्टादिकारिणां स्वर्गतानां कर्मशेषेण भूमिमुपेयुषां वृष्टिद्वारा ओषधिसंपर्कं प्राप्तानामनुशयिनां संबंधी भूत्वा प्रथममोषधीषु बिभृतः सन् पश्चाद्रोदस्योर्द्यावापृथिव्योः द्यौः पिता पृथिवी मातेति मंत्रवर्णात् मातरि शोणितरूपेण पितरि रेतोरूपेण परिणतः सन् तयोः संयोगान्मातृभ्यो जातो भवति तेन ओषधिसंबंधेन पूर्वजन्मालिंगेन मातृभ्य इति बहुवचनेनच संसारस्यानादित्वं दर्शितं ॥ चित्रः शिशुर्जातः सन् तमांस्यक्तून् परिदेहाद्यात्मबुद्धिरूपा अज्ञानरात्रीः परिप्राप्य दुःखितोस्तीति प्रकर्षेण कनिक्रदत् रुदन् अधिगाः अधिगतवानसि॥अत्र विज्ञानस्यैव तमोभिभूतत्वं भोगभाक्त्वं शोकभाक्त्वं चोक्तं॥ १ ३॥एवं मातृभिश्च

**विष्णुरित्था परमस्य विद्वाञ्जातो बृहन्नभि याति तृतीयं ॥ आसायदस्य पयोक्रृतस्वं सचेतसो अभ्यर्चन्त्यत्र ॥ १४ ॥**

रुद्रप्राशने कृते सति किमभूत्तदाह विष्णुरिति। विष्णुर्नारायणः एवमस्याग्नेर्गर्भभूतस्य परमं रक्षोवधाद्युत्कृष्टं चिकीर्षितं विद्वान् जानन् जातस्तत्र गर्भे आविर्भूतः जलचंद्रवत् स च बृहन् ब्रह्मैव सन् विज्ञान

गुणान् तमआदीन् अस्पृशन्नेव ॥तृतीयं शुद्धकारणापेक्षया त्रयाणां पूरणं कार्यदेहं अभियाति धत्ते अस्य विग्रहस्य आसा आस्ना आस्येन एतद्रूपभजनद्वारेत्यर्थः पद्दन्नित्यादिना आस्यशब्दस्यासन्नादेशे सुपां सुलुगिति तृतीयैकवचनस्यडादेशः पयः क्षीराधिं स्वं स्वीयं अकृत कृतवन्तः उपमन्युप्रभृतयोभक्ता इति हेतोः सचेतसो धीमन्तोऽत्रैव तृतीये रूपे श्रद्धालवोविष्णुमभ्यर्चन्ति एतेनास्य भक्तानुग्रह एव मुख्यं प्रयोजनं दुष्टनिग्रहस्तु तच्छेषभूत इति गम्यते ॥ पक्षे विष्णुरंतर्यामी परमं मोक्षरूपं प्रयो-जनं अस्येत्यादि सर्वनामत्रयस्य मानुषदेहएवार्थः शेषं सुगमं ॥ १४ ॥ अत इति ॥ अत उक्तहे

**अत उ त्वा पितुभृतो जनित्रीरन्नावृधं प्रतिचरंत्यन्नैः । ता ईं प्रत्येषि पुनर-
न्यरूपा असित्वं विक्षु मानुषीषु होता ॥ १५ ॥**

तोस्त्वा त्वां विष्णुं उ निश्चितं पितुभृतोऽन्नपुष्टाः जनित्रीर्मातरः अन्नावृधं विराजोपि वर्धकं अन्नैः क्षीराद्यैः प्रतिचरंति पुष्यन्ति ॥ ताः मातृः त्वं पुनरन्यरूपाः पूर्वमाराधयित्रीः सतीः पश्चादाराध्यरूपाः संप्रत्यन्वेषि आराधयासि ॥ यतस्त्वं मानुषीषु विक्षु प्रजासु होतासि यज्ञादिसदाचारप्रवर्तकोसि अतोमातृदैवतावन्मानयसीत्यर्थः॥ पक्षे स्वचः सुखाशावतीर्मातृः दुःखिताः सतीरन्वेषि एतेन निषि-

॥२०॥

द्धकर्माचरणतो मोह उक्तः ॥ अक्षरयोजना स्पष्टा अन्नावृधं अन्नावृधं विश्वायुषमिति निपातनाद्दैर्घ्यं पूर्वपदातस्य ॥ १५ ॥ जनित्रीणामाकाक्षितं संख्याविशेषमाह । तिस्र इति । तिस्रः कौशल्याकै-

**तिस्रोमातृस्त्रीन् पितृन्बिभ्रदेक ऊर्ध्वस्तथौ नेमवग्लापयंति । मंत्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वां ॥ १६ ॥**

केयीसुमित्रासंज्ञाः मातृः त्रीन् पितृन् जनयितारं दशरथं वसिष्ठमुपनेतारं विश्वामित्रं विद्याप्रदातारं चेति त्रीन् बिभ्रत पालयन् त्रिमातृकत्वादनेकदेहोपि एक एव ऊर्ध्व विज्ञानधर्मेषु शोकायासादिष्वनिमग्न एव तस्थौ ॥ अत एव ईं एनं ते मात्रादयः न अवग्लापयंति ग्लपयन्ति ॥ ग्लापयंतीत्यादेर्दैर्घ्यं ॥ देहप्रदानात् तत्कृतेन दुःखेन नाभिभवन्ति । अत्र हेतुमाह मंत्रयन्त इति ॥ दिवःपृष्ठे मेरुमूर्धनि अमुष्यप्रतिपादिकां वाचं उपनिषदं ब्रह्मादयो मन्त्रयन्ते विचारयंति विश्वंवेदयितितां विश्वविदं अविश्वमिन्वां विश्वस्माद्व्यावृतां एकविज्ञानात्सर्वविज्ञानप्रदायाः नेति नेतीति मूर्तामूर्तप्रपंचनिषेधिकायाः ब्रह्मादिभिरप्यन्वेषणीयायाः वाचो विषयमिमं मात्रादिजो देहो न बध्नातीत्यर्थः। अत्रापीश्वरस्य सतः त्रिमातृकत्वं दाशरथावेव दृष्टं पक्षे तिस्रोमातरः समष्टिस्थूलसूक्ष्मकारणरूपा उपाध-

यः त्रयः पितरस्तदभिमानिनाश्चिदाभासाः वैश्वानरहिरण्यगर्भांतर्यामिसंज्ञाः तज्जोविज्ञानधातुरपि व्यष्टिस्थूलसूक्ष्मकारणरूपेण त्रिविधः तदभिमानिनाश्चिदाभासा अपि त्रयोविश्वतैजसप्राज्ञसंज्ञाः ॥ एतेषामधिष्ठानभूतोपि न विक्रियत इत्यर्थः अक्षरयोजनापूर्वोक्तैव ॥ १६ ॥ बहुमातृकस्यापेक्षितं रूपभेदं तां सुतीयमंत्रेणाह चत्वारित इति ॥ नामनिश्चितं नामोपलक्षितानि रूपाणि

**चत्वारिते असुर्याणि नामादाभ्यानि महिषस्य सन्ति। त्वमंगतानि विश्वानि वित्सेयेभिः कर्माणि मघवञ्चकर्थ ॥ १७॥**

वा विभक्तिलोपआर्षः चत्वारि रामलक्ष्मणभरतशत्रुघ्नाख्यानि असुर्याणि असुराणामप्युत्करीत्या हितानि अदाभ्यानि अनधिभाव्यानि महिषस्य महतस्तव सन्ति । हे अंग तानि विश्वानि सर्वाणि नामानि त्वं त्वमेव वित्से लभसे ॥ येभिर्यैः रूपैः मघवन् लक्ष्मीपते कर्माणि इन्द्रजिल्लवणवधादीनि चकर्थ। लक्ष्मणादयस्त्वत्तो नातिरिच्यन्ते मृद इव बीजांकुरद्रुमा इत्यर्थः। अयं भावः। यथा कौशल्याकैकेयीभ्यामर्धमर्धं चरुं प्राप्य स्वस्वचरुभागस्यैकैकोंशः सुमित्रायै दत्तः॥ तेन सुमित्रा द्वौ पुत्रौ लेभे ॥ इतरेत्वेकमेकमेवेति चत्वारः पुत्राः एवं कार्यकारणरूपयोर्विराडंतर्यामिणो-

मध्ये सूत्रात्मा उभयधर्मानुसारीति तत्र प्रतिफलितं चैतन्यमप्युभयविधं तत्र कार्यांशप्रतिबिंबः शत्रुघ्नः कार्योपाधिं भरतमन्वेति । कारणांशप्रतिबिम्बो लक्ष्मणः कारणोपाधिं राममन्वेति ॥ १७ ॥ तिस्रोमातॄः स्त्रीन् पितॄनित्युक्तं । तत्र मुख्यं पितरं मुख्यां मातरं चाह ॥ अमंदानिति सप्तर्चेन सूक्तेन तत्र प्रकृतोपयोगि मंत्रचतुष्टयं व्याक्रियते ॥ भाव्यपुत्रेण स्वनयापरनाम्ना रथदशकप्रदानाद्दशरथाख्यत्वं गतेन राज्ञा तोषितः कक्षीवान्वक्ता अमंदानिति कक्षीवान्दानतुष्टः पंचभिर्भावयव्यं तुष्टावांत्ये अनुष्टुभौ भावयव्यरोमशयोर्दंपत्योः संवाद इति अनुक्रमणिकायां भावयव्य इति चतुरक्षरं नामावगतं तत्र मध्यमवर्णद्वयलोपेन भावयव्य एव भाव्यः तत्रेयमाद्याऋक् अमंदानिति ।

**अमंदान्स्तोमान्प्रभरे मनीषासिंधावधिक्षियतो भाव्यस्य ॥ यो मे सहस्रममिमीतसवानतूर्तो राजाश्रवइच्छमानः ॥ १८ ॥**

तस्य भाव्यस्यार्थे अमंदान् मानुषत्वे जीवभावाप्राप्तेरमूढान् स्तोमान् स्तुत्यान् वंशसंधान् पुत्रानित्यर्थः । मनीषया संकल्पेनैव प्रभरे प्रकर्षेण संचिनोमि ॥ कीदृशान् सिंधौ समुद्रेपि अधिअधिकं क्षियतः ऐश्वर्ययुक्तान् उपरि सेतुं कृत्वा निवसत इति वा समुद्रदमनसमर्थान्पुत्रान्भा-

व्यस्यार्थे कल्पयामीत्यर्थः यो भाव्यो मे मह्यं सहस्रं गवां अमिमतिसंख्यातवान् दातुं सर्वान् वर्णद्वय- लोपआर्षः सननं विभजनं दानं तद्वान् अतूर्तोऽहिंसितः श्रवः कीर्तिं इच्छमानः सवान् यज्ञानिति यथा भाष्यं वा ॥ १८ ॥ उपमेति ॥ स्वनयेन राज्ञा दत्ताः श्यावाः कृष्णकाष्ठजाः दशरथासोरथाः

उप मा श्यावाः स्वनयन दत्ता वधूमन्तो दशरथासो अस्थुः । षष्टिःसहस्रम- नुगव्यमागात्सनत्कक्षीवां अभिपित्वे अह्नां ॥ १९ ॥

वधूमन्तः प्रत्येकं शकटीयुक्ताः मा उपास्थुः मम समीपे स्थितवन्तः ॥ तथा षष्टिः सहस्रं गव्यं गोयूथं च रथाननु आगात् आगतं मां प्रतिअतः कक्षीवानहं अह्नांक्रतून अभिपित्वे सर्वतः पालयितरि सत्पात्रे ईश्वरे वा सनत् धनानि विभजन् अस्मीति शेषः दशरथपदप्रवृत्तिनिमित्तं प्रागुक्तं ज्ञापयन्नयं मंत्रः प्रसंगादुपन्यस्तः ॥ १९ ॥ चत्वारिंशदिति दशरथस्य राज्ञो यज्ञे लब्धाः

चत्वारिंशद्दशरथस्य शोणाः सहस्रस्याग्रे श्रेणिं नयन्ति ॥ मदच्युतः कृशना- वतोअत्यान्कक्षीवन्त उदमृक्षंतपज्राः ॥ २० ॥

चत्वारिंशत्संख्याः शोणाः अरुणाश्वाः सहस्रस्य सहस्राश्ववाह्यस्यापि रथस्याग्रे पुरस्तात् श्रेणिं रथनेमिपंक्तिं नयन्ति प्रापयन्ति अतिवेगवत्त्वात् तांश्च मदच्युतः श्च्योतन्मदान्कृशनावतः कृशनं कर्शनं नियंत्रणं तद्वतः सुशिक्षितानित्यर्थः अत्यान् अतिक्रम्य गन्तुमर्हान् मंडूकगतीनित्यर्थः कक्षीवन्तः पुत्राः उदमृक्षंत सादिनोभूत्वाऽश्वगुणसंतुष्टाः स्कंधदेशे मार्जितवन्तः प्रेम्णा परामृशन्नित्यर्थः यतः पूर्वं पज्राःपद्भ्यामेव जीर्यन्त इति पज्राः पादचारेणखिन्नाः पक्षे पूर्वं ब्रह्मणिषण्णांमुपाधीनां चिदाभासानां चारोय उक्तः तदपवादेन निर्विशेषं वस्त्वधिगन्तुं योग्यतासिद्ध्यर्थममंदनितिमंत्रद्वयेन दशरथस्य दानादिकमुक्तं तेन योतिमहति कुले जातः महांति यज्ञदानादीनि करोति स एव ब्रह्मज्ञानयोग्यो भवतीति गम्यते तथा च श्रुतिर्विविदिषंति यज्ञेन दानेनेत्यादि तृतीये तु मंत्रेऽपवाद उच्यते तत्रायमक्षरार्थः दशभिरिन्द्रियाश्वैर्युक्तो मनोमयः कोशो दशरथः तस्य च शोणाः रागाः प्रतीन्द्रियार्थं प्रसुप्ततनुछिन्नोदारभेदेन चतूरूपाः सन्तश्चत्वारिंशत् ते च तावन्तोपि सहस्रस्याग्रे सहस्रादप्यधिकं श्रेणिं रागपंक्तिं नयंति प्रापयन्ति विषयाणामानंत्यादनन्ता इत्यर्थः अनन्तं वै मन इति श्रुतेः मदच्युत इति तेषामुदारावस्था कृशनावत इति कृशनं कार्श्यं तद्वत

इति तन्ववस्था अत्यानिति प्रसुप्तविच्छिन्नावस्थे च दर्शिते तांश्च सर्वान् कक्षीवन्त उदमृक्षन्त पासुरेखावदुन्मार्जितवन्तः यतः पज्राः इन्द्रियाश्वान्नारोहन्तीत्यर्थः एतेन इन्द्रियनिर्मुक्तमनोमात्रावस्थानेन योगिनः स्वप्नस्थस्येव अन्नमयप्राणमययोरप्रतिसंधानेन प्रविलय उक्तः ॥ २० ॥ एवं कक्षीवता दशरथस्य पुत्रप्रदाने संकल्पिते दशरथः स्वभार्यायाः व्रतदार्ढ्ये संदिहानस्तया प्रबोध्यते । उपमेति ।

**उपोपमे परामृशमामेदभ्राणि मन्यथाः ॥ सर्वाहमस्मिरोमशागंधारीणामिवाविका ॥ २१ ॥**

पादपूरणार्थमुपसर्गस्याद्वित्वं मे मम उपोपसमीपे परामृश इयं दृढव्रतास्ति नवेति मदीयैलक्षणैर्विचारय मे ममव्रतानि दभ्राणि अर्धस्थितानि मामन्यथाःमा जानीहि॥यतोहं सर्वाकृत्स्ना रोमशा रोमाणि शातप्रतिविधूननेन दूरीकरोतीतिरोमशा अश्वा सेव शातितदोषाऽस्मि । अश्वा इव रोमाणि विधूय पापमिति श्रुत्यन्तरप्रसिद्धोयं दृष्टान्तः यथा गंधारीणां गंधारदेशीयानामविका बहुलोमापि अविपालैः शातितलोमा क्रियते तथास्मि अत्र केचिद्रोमशापदेन रोमवत्यस्मीति व्याचक्षते तद्विगीतत्वादुपेक्ष्यं । सर्वातारोमशा कृधीत्यत्र अपालामिन्द्रत्रिपूतत्वंकृणोः सूर्यत्वचमित्यनंतरमन्त्रेऽपालायाः त्रिःशोध-

नेन सूर्यसमत्वमकरोः तथा ममापि तानि सर्वाणि उर्वरादीनि पूर्वमंत्रोक्तानि प्ररोहार्थं शोधयित्वा दीप्तिमंति कुर्विति समुदायार्थः प्रतीयते स एवात्रापि गृहीतुं युक्तः रोमशे त्यव्युत्पन्नं प्रातिपदिकं । अन्यथामत्वर्थीयशप्रत्ययान्तत्वे पदकालेएवगृह्येत अत्रांतरपदसंज्ञायाः सत्त्वादिति दिक् । पक्षे बुद्धिमालिन्ये सति बाह्येंद्रियवियुक्तमपि मनः स्वप्नेपि महांतमनर्थं सृजति अतस्तस्यां शुद्धायां अस्मितामात्रावशेषायां सर्वसंकल्पोपरमान्मनोमयस्य अहं कर्तेति अभि- मानाभावान्मनोमयस्य विप्रविलापनं कृतं भवति कुशलैव कौशल्यातत्त्वप्रतिपत्तियोग्येति योर्थः कौशल्यापदेनोक्तः स एवात्र रोमशापदेन गृहीत इति कौशल्यायाः नामान्तरं रोमशेति तथा ऋष्यशृंगस्य नामान्तरं कक्षीवानिति एवमादि तत्तन्नियोगानुष्ठानवशादुन्नेयं ॥ २१ ॥ तदेवं राम- भद्रादीनां चतुर्णां जन्म वर्णितं तेषु काकपक्षधरेषु यज्ञविघ्नापनोदनार्थं रामलक्ष्मणौ याचितुं दशरथं प्रति विश्वामित्र आजगामेति कथासूचकं मंत्रमाह । महानिति । महान्

**महांऋषिर्देवजोदेवजूतोअस्तंभ्नात्सिंधुमर्णवं नृचक्षाः॥ विश्वामित्रोयदवहत्सु- दासमप्रियायत कुशिकेभिरिन्द्रः ॥ २२ ॥**

पूज्यः ऋषिर्नारायणः देवजः राज्ञः सकाशादाविर्भूतः देवजूतः देवाः इन्द्रादय इन्द्रियाणि वा जूताः प्रेरितानि येन स देवजूतः सिन्धुं स्यंदमानमर्णवं समुद्रं अस्तभ्नात् स्तंभितवान् नॄन् चष्टे अनुकंप्यत्वेन पश्यतीति नृचक्षाः इन्द्रियद्रष्टा वा चक्षुषश्चक्षुरिति श्रुतेः ॥ तमृषिं सुदासं वसिष्ठः सुदासं पैजवनमभिषिषेचेति ब्राह्मणाद्वसिष्ठयाज्यस्य मुख्यस्य सुदासोऽत्रग्रहणायोगात् सुदासो राज्ञो गोत्रे भवं रामं विश्वामित्रः स्वयज्ञं त्रातुं यत् अवहन् यज्ञवाटं प्रतिप्रापितवान् तेन कर्मणा इन्द्रः कुशिकैः कुशिकसंतत्या अप्रियायत अविघ्नेन यज्ञे हवींषिभोक्ष्यामीति हर्षं प्राप्तवान् पक्षे विश्वामित्रो जीवः आनंदमयं शोधितत्वंपदार्थमात्मानं गौणकर्मसुदासं रामाख्यं पुच्छं ब्रह्मप्रापितवान् अतः ब्रह्मनिष्ठैः कुशिकैरिन्द्रोऽप्रियायत आत्मा ह्येषां सभवतीति श्रुतेःब्रह्मिष्ठो ब्रह्मनिष्ठो देवानामात्मभावं गतस्तेषां प्रियतमो भवतीति भावः एतेनानंदमयस्य प्रविलय उक्तः तमेतं मुमुक्षुंप्राप्यमात्मानमज्ञात्वा यः कर्म करोति तत्तस्य नश्यतीति रामं प्रति विश्वामित्रागमनेन सूचितं श्रुतिश्चैतदाह यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिंल्लोके जुहोति यजाति ददाति माध्यंदिनपाठे तपस्तप्यतेइत्यपि बहूनिवर्षसहस्राण्यंतोयदेवास्य तद्भवतीति अत्राप्यर्णवस्तंभनं विपिबध्वं कुशिकाः सोम्यं मध्विति राजावृत्रं जंघनप्रागपागुदगिति च

सोमपानाभ्यनुज्ञानं सर्वदेशीयवृत्रहननं च वक्ष्यमाणं विश्वामित्राद्बलातिबलयोर्ग्रहणं चेति सर्वं राम एव संगतं ॥ एवमन्यदपि लिंगविशेषोपेतं मंत्रजातमुदाह्रियते ननिर्लिङ्गं हठादाकृष्यत इति दिक् ॥ २२ ॥ ततो यज्ञरक्षार्थं प्रस्थितौ रामलक्ष्मणौ सूर्यासावित्रीनामदेवता स्तौति ॥ पूर्वापरमिति ।

**पूर्वापरं चरतौ माययैतौ शिशुक्रीळंतौ परिपातो अध्वरं ॥ विश्वान्यन्यो भुवनाभिचष्ट ऋतूनन्यो विदधज्जायते पुनः ॥ २३ ॥**

शिशूरामलक्ष्मणौ पूर्वापरमग्रे पश्चाच्च चरतो गच्छतः मायया शिशुत्वं एतौ गतौ क्रीडंतौ अध्वरं परिपातः तयोरन्य एको रामः सूर्यवद्विश्वानि भुवनानि क्षेत्राणि आभिचष्टे साकल्येन पश्यति । चैतन्यज्योतिःस्वरूपत्वात् । अन्यो लक्ष्मणः ऋतून् तिथ्यादिजननक्रमेण वसंतादीन् चंद्र इव ऋतुशब्दोदितं कालं काल्यमानं जगत् विदधद्रचयन् पुनः पुनर्जायते पक्षे श्रुतितो युक्तितश्चाध्यारोपापवादाभ्यां प्रतिपन्नस्य वस्तुनः सम्पादनार्थं निदिध्यासमिच्छतः तदालंबनत्वेन सूत्रान्तर्यामिणावुपन्यस्तौ यद्यपि यज्ञं प्रतिगंतृत्वं रामकृष्णयोरपि शिश्वोर्दृष्टं (?) तथापीत आरभ्य यावदध्यायपरिसमाप्ति विवाहलिंगानि गृभ्णामि ते सौभगत्वाय हस्तमित्यादीनि उदीर्षातः पतिवतीह्ये-

षा संजायां पत्या सृजेति भार्या हर्तुः प्रार्थना रूपेण लिंगेन लब्धायाः भार्यायाः हरणं पुनः पत्नी मग्निरदादिति पुनस्तल्लाभ इत्येतत्समुच्चितं सर्वं रामे एव संगतमिति अय प्रघट्टको रामपर एव ॥२३॥ प्रस्थितयोस्तयोः पुरस्ताटिकामागतां वीक्ष्य ऋषिराह परादेहीति। विजयाश्रियं गृहश्रियं वा प्राप्तुं

**परादेहि शामूल्यं ब्रह्मभ्यो विभजावसु कृत्यैषा यद्वती भूत्का जाया विशते पतिं ॥ २४ ॥**

गच्छतः पूर्वं पराजयरूपा दारिद्र्यरूपा वा अलक्ष्मीरायाति तत्र पूर्वा शस्त्रेणैव हंतव्या परा दानादिना हंतव्येत्यत उक्तं शामूल्यममंगल्यं इदं ताटिकारूपं परादेहि दूरतः खंडय इतरस्याः विनाशार्थं ब्रह्मभ्यो ब्राह्मणेभ्यो वसु वित्तं विभज देहि कुतः यत एषा कृत्या वधकामा राक्षसी पद्वती पादवती जायेव सहचारिणी भूत्वा पतिं राजानं गृहपतिं वाविशते आपाति एवमुक्तमात्रेण रामेण ताटिका निहता विवाहात् प्राक् ब्राह्मणेभ्यो दानानि च दत्तानीत्युपरिष्टाद्द्रष्टव्यं पक्षे शामूल्यमर्थतृष्णा सा हि कर्मोपास्ति मतिबन्धहेतुर्वैराग्येण सर्वत्यागेन च हंतव्येति भावः अयमपि पूर्वापरीय एव मंत्रः ॥ २४ ॥ एवं ताटिकां हत्वा यज्ञवाटमागत्याहतुः उपप्रेति। भो कुशिकाः विश्वामित्रीयाः उपप्रेत समीपं प्रकर्षे-

उपप्रेत कुशिकाश्चेतयध्वंमश्वं राये प्रभुं च तासु दासः राजा वृत्रं जंघनत्प्रागपा-
गुदगथा यजाते वर आपृथिव्याः ॥ २५ ॥

णायात चैतयध्वं सावधाना भवत रामे कर्मसमृद्धये सुदासः सुदागोत्रोत्पन्नस्य रामस्याज्ञया अश्वं यज्ञसाधनविशेषं प्रमुंचत प्रचारयत राजा रामो वृत्रं विघ्नकरं असुरगणं जंघनत् निहन्ति प्रागपागुदक् सर्वदिक्षु स्थितं अथ अनंतरं पृथिव्याः वरे स्थाने यज्ञवाटे आयजाते उपसंवादं करोति यजध्वमित्याज्ञापयतीत्यर्थः अत्र वृत्रशब्दितौ मारीचसुबाहू पक्षे कर्तृत्वाभिनिमानः फलाभिषंगश्च तौ निहत्य ईश्वरो भक्तानां यज्ञं यातीति भावः अश्वादिकीर्तनं प्ररोचनार्थं ॥ २५ ॥ एवमुक्तिपूर्वकं यागे साधिते रामे विश्वामित्रानुग्रहमाह विश्वामित्रा इति । विश्वामित्राः ऋषयः ब्रह्म महतीं विद्यां बलातिबलाख्यां इन्द्राय रामाय अरासत दत्तवन्तः वज्रिणे

विश्वामित्रा अरासत ब्रह्मेन्द्राय वज्रिणे करदिन्नः सुराधसः ॥ २६ ॥

महामणिधारिणे कीदृशं ब्रह्म नः अस्मान् सुराधसः शोभनसिद्धियुक्तानेव करत् कुर्वत् पक्षे एवं तृष्णासंगं फलाशां च त्यक्त्वाऽनुष्ठिते यज्ञे किंचिच्चित्तशुद्धौ जातायां विश्वामित्रो जीवः सर्वा-

मंत्र- णि कर्मांगावबद्धानि तत्तद्देवतोपासनानि प्रत्यगभिन्नरामाभिमुखान्येव करोति अहं क्रतुरहं यज्ञ रामायणं.
॥२६॥ इत्युक्तप्रकारणेति भावः ॥ २६ ॥ तत्रायं बलामंत्रो बलं धेहीति बलं धेहि अनलुत्स्विति जीवि

**तनूपनो बलामन्द्रानतुत्सुनः बलन्तो कायतनयाय जीवसे त्वं हि बलदा असि ॥ २७ ॥**

कामात्रस्योपलक्षणं तोकायेति स्यादेरप्युपलक्षणं तोकाय स्त्रीपुंसाधारणायापत्याय तनयाय पुत्राय जीवसे जीवितुं शेषं स्पष्टं सर्वेषां दार्थेसनि स्वस्थचित्तो बाह्यानाभ्यन्तरांश्चारीन् जेतुं क्षमते इति भावः ॥ २७ ॥ अतिबलामंत्रमाह । इन्द्रोतिभिरिति । हे इन्द्र ऊतिभिर्विभूतिभिर्बहुलाभिर्नोऽस्मान् अद्य

**इन्द्रोतिभिर्बहुलाभिर्नो अद्ययाच्छ्रेष्ठाभिर्मघवन् शूरजिन्व । या नो द्वेष्णधरः सस्यदीष्टयमुद्विष्मस्तमुप्राणो जहातु ॥ २८ ॥**

जिन्व तर्पय यात्च्छ्रेष्टाभिः यात्सु गच्छत्सु ब्रह्मादिषु मध्ये श्रेष्ठाभिः प्रशस्यतमाभिः हे मघवन् हे शूर ता ।
एवोतीराह यो नोऽस्मान् (?) द्वेष्टि सः अधरो नीचो भूत्वा पदीष्ट पततु । यमु पंच द्विष्मो वयं त- ॥२६॥
मु तमपि प्राणो जहातु अत्र बलायाः स्वरूपं शरीरसामर्थ्येनेष्टसिद्धिः अति बलायास्तु मनसैवेष्टसि-

द्धिः। पक्षे आसनादि दार्ढ्यं हेतुरारोग्यादिकं ऐकाग्र्यदार्ढ्यहेतुश्चित्तस्य प्रत्यक्प्रावण्यं चेति योग्यतया ग्राह्यं ऊतिभिर्योगैश्वर्यैः यच्छब्दादार्थः पाप्मा उपप्रेतेत्यादयश्चत्वारो मंत्रा महाऋषिरित्यादिप्रघट्टकस्थाः ॥ २८ ॥ एवं विद्यां प्राप्य गौतमाश्रमं गत्वाऽल्योद्धरणे कृते रामं गौतमः प्रस्तौति । अरं दास इति । अहं मीढुषे भार्याप्रदानेन मनोरथवार्षिणे देवाय राज्ञे रामाय दासो न दास इव अरंकराणि दिव्यगंध-

अरं दासो नमीढुषेकराण्यहं (?) देवाय भुर्णयेऽनागाः अचेतयदचितो देवो
अर्यो गृत्सरायेक पितरो जुनाति ॥ २९ ॥

पुष्पादिना अलंकरवाणि भूर्णये बहुप्रदात्रे अनागाः निर्दोषः यतः अर्यः स्वामी देवो द्योतमानः अचितः कर्मणिषष्ठी चेतनारहितां पाषाणभूतां जायां अचेतयत् चेतनावतीं कृतवान् अतो मादृशस्तव दासो गृत्सं प्राणोवैगृत्सइतिश्रुतेः प्राणवन्तं मेधाविनं जायादेहं राये कर्मसमृद्धये जुनाति अनुसराति कवितरः क्रान्तदर्शिषु श्रेयान् । पक्षेऽल्या सहधर्मचारिणी शुभवासना गौतमो धर्मः इन्द्रो धर्माभासः पाखंडधर्मः तेनाभिभूता सती रामाश्रयात्पुनर्धर्मसाहचर्यं लेभे इति अत्रापि पूर्वमंत्रेण अस्ति ज्यायान्कनीयस उपारं इति भ्रात्रोः साहचर्यं अर्योऽचितोऽचेत

यदिति लिंगद्वयं राघवैकशरणं ॥ २९ ॥ अथ स्वयंवरं जिगमिषोः रामस्य देवरथो दिव्यायुधानि
चोपस्थितानीत्याह । बलविज्ञाय इति । बलेविषये विज्ञायो विज्ञेयः परीक्षणीयोसि त्रैय्यंबकं

**बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः ॥ अभिवीरो अभि-**
**सत्वासहोजा जैत्रमिन्द्ररथमातिष्ठ गोवित् ॥ ३० ॥**

धनुः सज्यं कृतवते कन्यां दास्यामीत्याशयवता जनकेनेति शेषः । स्थविरो वृद्धः प्रवीरोऽतिशूरः सहस्वान् मानसबलवान् वाजी वाजो वेगः शारीरं बलं तद्वान् सहमानः शत्रुचमुविमर्दसोढा उग्रस्तासां मर्दिता अभिवीरः सर्वतोवीरैः भातृभिः परिवृतः एतेनास्मिन्काले जनकपुरे सर्वेषां भ्रातृणा सान्निध्यमस्तीति सूचितं । अभिसत्वा सर्वतो बलवान् सहोजाः मनःसंकल्पमात्रात् जातः न तु कर्मणा जातः ईदृक् सन् हे इन्द्र जैत्रं जयावहं रथं आतिष्ठ गोवित् गां भुवं विन्दति पालनीयत्वेनेति गोवित् राजा । पक्षे धर्मादिभिर्दृढमनाक्रान्तं मम चित्तरथं आक्रमस्व ततश्च धर्मादयोपि तत्रास्पदंलप्स्यंति इति भावः । अक्षरयोजना स्पष्टा ॥ ३० ॥ चम्विति ॥

चमूषच्छ्येनः शकुनो बिभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् अपामूर्मिं स
च मानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥ ३१ ॥

चमूः शत्रुसेनाः सादयतीति चमूषत् श्येनः शकुनः जीवेशयोः पक्षिणोर्मध्ये बलवान् पक्षी ईश्वर इत्यर्थः । विभृत्वा विश्वस्य धारकः पोषकश्च गोविन्दु गां पृथ्वीं विन्दति वराहावतारे लभत इति गोविन्दुः उकारीतत्त्वमार्षं द्रप्सः क्षीरादिमंडवत् ब्रह्मांडसारभूतः आयुधानि धनुर्बाणादीनी बिभ्रत् धारयन्नस्तु अपामूर्मिमन्तं समुद्रं सचमानो गच्छन् रावणवधार्थमिति शेषः । तुरीयं धाम विश्वतैज-सप्राज्ञापेक्षया चतुर्थं निरुपाधि चैतन्यज्योति महिषोमहान् आराधितः सन् विविवक्ति स्पष्टीकरोति शुद्धं ब्रह्मैवास्मान्वीरवेषेणावत्विविति भावः ॥ ३१ ॥ यदर्थं बलपरीक्षा जनकेन राज्ञा क्रियते तस्याः सीताया उत्पत्तिं भविष्यपुराणोपबृंहितामाह । पिता यदिति । पिता रावणो यत् यदा स्वां दुहितरं उ-

पिता यत्स्वांदुहितरमधिष्कन् क्ष्मयारेतः संजग्मानो निषिंचत् ।
स्वाध्योऽजनयन्ब्रह्मदेवावास्तोष्पतिं व्रतपां निरतक्षन् ॥ ३२ ॥

त्पन्नमात्रां इयं कुलोच्छेदिका भविष्यतीति दैवज्ञवचनात् अधि अधिकं स्कन् स्कन्नवान् दूरे त्यक्त- वान्। कुत्रेत्यत आह। क्षमया पृथिव्या संजग्मानः संगतः सन् रेतो दुहितृरूपं निषिंचत् निषिक्तवान् भूम्युदरे तां निहितवानित्यर्थः । तत्रापि स्वाध्यः सपरीवारस्य रावणस्य वधेन सुष्ठु कल्याणं ध्यावा पृथिव्योर्ध्यायन्ति ते स्वाध्याः देवाः इन्द्रादयः तज्जीवनार्थं ब्रह्म चैतन्यं अजनयन् मातृगर्भ इव पृथिवीगर्भेपि तामरक्ष्यन् ।न त्वसौश्वासानिरोधेन तत्र ममारेत्यर्थः। तत्रापि वास्तोष्पतिं स्थानाधिष्ठातारं गृहपतिं व्रतपां व्रतपतिं यजमानमुद्दिश्य निरतक्षन् यज्ञस्थानं कर्षितवन्तः ततश्चैनां स्थानपतिर्जनकोलब्ध- वानिति भावः। पक्षे पिता कामः दुहिता श्रद्धा वास्तोष्पतिर्यज्ञाधिकारी धर्मादिकामो ह्यदृष्टफले व्यर्थे श्रद्धां बध्नाति अतः कामजा श्रद्धा चेत् बोधेन संयुज्येत तर्हि सपरिवारं काममुन्मूलयेत् अतस्तां संतः (?) सात्विकीं राजसेन कामेन दूरे त्यक्तां यज्ञादिसत्कर्मकारी लभते इत्यर्थः ॥ ३२ ॥ एवमाविर्भूतां सीतां देवाः शमादयो प्रार्थयन्ते । अर्वाचीति । हे सुभगे हे सीते

**अर्वाची सुभगे भव सीते वंदामहे त्वा यथा नः सुभगा ससि यथा नः सुफला ससि ॥ ३३ ॥**

स्यति सर्वेषां रक्षसामन्तं करोतीति सीता कर्तरिक्तः लांगलपद्धतौ तु मुख्यस्यावयवार्थस्याभावात् सीतोत्पत्तिस्थानत्वेन सीतात्वं गौणं हे सीते त्वां वंदामहे यथा नोऽस्माकं सुभगा ऐश्वर्यदानेन सुफला प्रतिपक्षनाशनेन असप्ति दीप्यसे तथाऽर्वाची अनुकूला भव॥३३॥इन्द्र इति ।इन्द्रो रामः सीतां

**इन्द्र सीतां निगृह्णातुः तां पूषानुयच्छतु सामः पयस्वती दुहा मुत्तरा मुत्तरांसमां ॥ ३४ ॥**

निगृह्णातुवीर्य शुल्कां तां स्वायत्तां करोतु पुष्णातीति पूषा जनकश्च तां अनु पश्चात् रामाय यच्छतु ददातु सा सीता नोऽस्माकं दुहां दोग्ध्रीणां मध्ये उत्तरामुत्तरां समां उत्तरोत्तरवर्षेषु अत्यन्तसंयोगे द्वितीया पयस्वती बह्वन्नप्रदा भूयादिति शेषः।पक्षे इन्द्रः शास्त्रार्थावबोधः सीतां सात्विकीं श्रद्धां पूषा धर्मः पयो योगसिद्धिः ॥ ३४ ॥ ततः स्वयंवरशालां प्रविष्टेषु राजसु देववाक्यमिदं । गोत्रभिदमिति ॥

**गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्मप्रमृणन्तमोजसा इमं सजाता अनुवीरयध्वमिन्द्रं सखायो अनुसरंभध्वं ॥ ३५ ॥**

गोत्रः पर्वतेन्द्रः तेन तद्रूपं रुद्रधनुर्लक्ष्यते । त्रिपुरवधे रथः क्षोणी यंता शतधृतिरगेन्द्रो धनुरिति तस्य तद्धनुष्ट्व स्मरणात् । तद्भिदं रुद्रधनुर्भिदमित्यर्थः। अत्र संहितायां प्रपूर्व मंत्रे रक्षो हाऽमित्रो अपबाधमान इति पूर्वमंत्रे च बलं विज्ञाय इति गोत्रमिदिति (?) च लिंगात् अत्रापि गोत्रभित्पदस्य रुद्रधनुर्भित् राम एवार्थः न तु पर्वत पक्षशातनः शक्रः । वज्रबाहुं अज्मपणनीयं गृहाभिधं स्वीयं द्रव्यं जयन्तं ओजसा बलेन प्रमृणंतं मृन्द्रतं अर्थाद्धनुरेव ददृशं रामं भोः सजाताः समानाजाताः भ्रातरः इममनुलक्षीकृत्य वीरयध्वं विक्रमध्वं अन्येव सखा यो भाविनो वानराः अनुसंरभध्वं आद्रियध्वं शत्रुप्रकोपे सतीति शेषः । पक्षे गोत्रो मेरुः तेन तत्स्थः कामगणो लक्ष्यते तमपि तुच्छीकृत्य स्थितं गोत्रभिदं तीव्रवैराग्यवन्तं श्रद्धां चात्मसात्कृतवन्तः सजाताः धर्मज्ञानवैराग्यैश्वर्यादयः सखायः शमदमादयः इमामिन्द्रं भूमिमागत्य जीवभावं गतं। शेषं स्पष्टं ॥ ३५ ॥ एवं धनुर्भंगे कृते जनकः सीतामानाय्याह । सुमंगलीरिति । दत्वाय दत्वा। अस्तं स्वगृहं परेतन परावृत्य गच्छत । शेषं स्पष्टं ।

**सुमंगली रियं वधूरिमां समेत पश्यत सौभाग्यमस्यै दत्वा याथास्तं विपरेतन॥३६॥**

पक्षे वधूः श्रद्धा तस्याः सौभाग्यं यावद्विदेहकैवल्यं बोधेनावियोगः । अस्तं सर्वाधिष्ठानभूतं ब्रह्म ॥ ३६ ॥ ततो लब्धायाः सीतायाः पाणिग्रहणं रामः करोति । गृभ्णामि इति ॥ सौभगत्वाय

**गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथा सः । भगोऽर्यमा सविता पुरंधिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥ ३७ ॥**

सौभाग्याय पत्या सह जरदष्टिर्जीर्यत्कुचग्रंथिः यथा असः दीप्यसे तथा ते हस्तं गृभ्णामि गृह्णामि भगादयो देवाः त्वा त्वां मह्यं अदुर्दत्तवन्तः गार्हपत्याय॥गार्हस्थ्याय पक्षे यथा देवाः बोधस्य श्रद्धायोगं वांछन्ति एवं बोधोपि कैवल्यं फलं प्रसोतुं श्रद्धायोगं वांछति अक्षरयोजना मुखो ज्ञेया एतौ द्वावपि मंत्रौ पूर्वापरीयौ ॥ ३७ ॥ एवं सीतामदायायोध्यां प्रति प्रस्थितेन रामेण मध्ये मार्गे परशुरामे विजिते देवाः अस्तुवन् (?) अयं स्तुतइति पंचभिः । अयं रामो राजा स्तुतो वंदि अवंदि च

**अयं स्ततो राजा वंदि वेधा अपश्च विप्रस्तराति स्वसेतुः सवदनोवितं रेजयत्सो अग्निं नेमिन्नचक्र मर्वतो रघुद्रुः ॥ ३८ ॥**

देवैः अभिवादितो यतो वेधाः जगतः स्रष्टा अपः समुद्रं तरति तरिष्यति शीघ्रमेव तथा
विप्रः विप्रं च द्वितीयार्थे प्रथमा । जामदग्न्यं च तरति । यतः स्वसेतुः स्वकृतः सेतुरवतरणसा-
धनं यस्यास्ति स तथा । अस्य शिलामयः सेतुः प्रसिद्धः विप्रेणानापदि शस्त्रं न धार्यमिति मर्यादा-
पि स्वकृता सेतुरेव तदुल्लंघन कर्तृत्वाद्भार्गवोप्युल्लंघनीय एव स राजा कक्षीवन्तं येन दशरथाय
वरो दत्तः समुद्रजयिनस्तव पुत्राः भविष्यंतीति तं अग्निं च चरुरूपेण गर्भीभवन्तं रेजयत् प्रेरित
वान् तत्र दृष्टान्तो नेमिं नेति नेमिमच्चक्रं यथाऽर्वतोऽश्वाननुरघुद्रुःशीघ्रगाभी भवति तद्वत्कक्षीवदाद-
यस्त्वत्प्रेरिता इत्यर्थः। एतच्च प्रागेव दर्शितं अत्र जामदग्न्योब्राह्मणराजत्वात्सोमः दाशरथिः क्ष-
त्रियराजत्वादादित्यः सोमोऽस्माकं ब्राह्मणानां राजा आदित्यो वै दैवं क्षत्रमिति श्रुतिभ्यां तौ
च पूर्वापरमंत्रोक्तरीत्या कार्यकारणरूपौ अतः तस्य कारणानभिज्ञस्य कार्यस्य कारणेनाभिभवो युक्तः
सूर्येण चन्द्रस्येव । अत्र दृप्तबालाकिरजातशत्रुश्च दृष्टांतत्त्वेन ज्ञेयौ यत्तु रामबाणेन जामदग्न्यस्य लो-
का नाशिता इति तज्जगत्कारणबोधाद्ब्राह्मलौकिकमैश्वर्यं बाधितं भवतीत्येवपरं इमे मंत्राः विप्रास्तरणः ॥३०॥
लिंगात् पूर्वोक्तकक्षीवदादिलिंगादक्ष्यमाणलिंगेभ्यश्च रामपराः ॥३८॥ सद्विबंधुरिति सः राजा द्विबंधुः

द्वयोरन्योन्यविरोधिनोरपि वसिष्ठविश्वामित्रयोर्बन्धुः मित्रं सर्वात्मत्वात्सर्वसमइत्यर्थः। तावेवद्दावाह । एको वैतरणो दाता परो यष्टा यागादिकर्ता तयोर्विरोधप्रयोजकमाह । सबर्धुसगर्भतादशायामपि दुग्धे इति सबर्धु धेनुं दोग्ध्रीं अस्वं अप्रसूतां यावत्प्रसूतिक्षीरदामित्यर्थः प्रसूत्युत्तरमेव । दशाहं क्षीरं न दुग्धे ॥ तस्माद्वत्सं जातं दशरात्रीर्न दुहन्तीति श्रुतेः दुहध्यै दोग्धुं तादृशीं वसिष्ठधेनुं प्राप्तुं विश्वा-

**सद्विबन्धुर्वैतरणो यष्टा सबर्धुंधेनुमस्वंदुहध्यै ।**
**संयन्मित्रावरुणावृंजदुक्थैर्ज्येष्ठेभिरर्यमणं वरूथैः ॥ ३९ ॥**

मित्रः कोटिशो धेनूर्वितरन्नासीत् यागानुरोधी वसिष्ठस्तु ताः नांगीचकार नापि स्वां धेनुं ददाविति पुराणप्रसिद्धं यथाक्रमं वैतरणः यत् यदर्थं मित्रावरुणयोः पुत्रं वसिष्ठं मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वा वासतीवरे कुंभे रेतोऽपतत्ततोऽगस्त्यवसिष्ठावजायेतामिति वैदिकप्रसिद्धेः उक्थैर्नानाविधैः कर्मभिःसंवृंजे हिंसितवान् तथा यष्टापि ज्येष्ठेभिः योगप्रभावसृष्टैः वरूथैः सैन्यैः अर्यमणं अर्यं स्वामिनमात्मानं मन्यत इत्यर्यमा तं संवृंजे इत्यनुषज्यते ॥ ३९ ॥ सः पूर्वमंत्रोक्तो राजा

बंधुर्वश्यो यस्य स तद्बन्धुः नाभानेदिष्ठोनाम ऋषिः रपति स्पष्टं वक्ति ॥ कीदृशः सूरिः विद्वान् तथा हेशिष्य ते तव दिवि हार्दाकाशे धियं धाः बुद्धेर्धारकः तव पराविद्योपदेशकः प्रवेनन् ब्रह्मवित्त्वादेव अत्यन्तं



कान्तिमान् किं रपति तदाह सा विधेयापेक्षं स्त्रीत्वं स राजानोस्माकं जीवानां सोपाधीनां नाभिरिव नाभिः मध्यं अन्तरं उपाध्यपगमावशिष्टं रूपं परमा महती त्रिविधपरिच्छेदशून्येत्यर्थः वाघेत्यनर्थ-

## तद्बन्धुः सूरिर्दिविते धियं धा नाभानेदिष्ठो रपति प्रवेनन्।
## सानोनाभिः परमास्य वाघाहं तत्पश्चाकतिथश्चिदास ॥ ४० ॥
## इयंमेनाभिरिह मेसधस्थमिमे मे देवा अयमस्मि सर्वः। द्विजा
## अहप्रथमजा ऋतस्येदं धेनुरदुहज्जायमाना ॥ ४१ ॥

कौ अस्य राज्ञः पश्चात् अनंतरं अहंनाभानेदिष्ठः कतिथः कतितमश्चिद्वितर्के आस अभूवं आसेति लिटा स्वस्याप्येतत्परोक्षमित्युक्तं ॥ तथा हि विष्णोर्ब्रह्मा ततो मरीचिसुतः कश्यपस्ततो

॥ ३१ ॥

विवस्वान् ततोमनुर्मनोर्नाभानेदिष्ठ इति वंशो गम्यते ॥ ४० ॥ इयं अयं राजा मे मम

नाभिः कोशपंचकान्तर्गत शुद्धरूपं इह अस्मिन्नेव मे मम सधस्थं गृहं लयस्थानमव्याकृतमित्यर्थः ॥ कारणस्याप्ययमेवाधिष्ठानं इमे देवीः इन्द्रियाणि च मे मम इमे अयमेव विधेयापेक्षं बहुत्वं अयमहमेवास्मि सर्वः सर्वात्मा किं च ऋतस्य सत्यस्य वस्तुनः प्रथमजाः प्रथमं जातो अव्यक्तरूपी तथा द्विजाः द्वितीयं जातो व्यक्तरूपी च अहनिश्चितं इदं यमेव इदमित्थं शास्त्रतत्वं जायमानाऽस्य निःश्वसितवदाविर्भवन्ती धेनुर्वाकू अदुहत् प्रकाशितवती ॥ ४१ ॥ अध अनन्तरं अयं राजा आसु

अधासुमंद्रो अरतिर्विभावाऽवस्यति द्विवर्तनिर्वनेषाट् ।
ऊर्ध्वायच्छ्रेणिर्नशिशुर्दन्मक्षू स्थिरंशेवृधं सूत माता ॥ ४२ ॥

भूवसतिषु मंद्रो मध्यगतिः विभावा विशेषण तेजस्वी अरतिर्ब्रह्मचर्यव्रतनिष्ठः अवस्यति अवस्थितिं प्राप्नोति देशान्तरं गच्छन् स्थाने स्थाने वासं करोतीत्यर्थः अवस्यति रक्षसामन्तं करोति वाऽर्थः कीदृशः द्विवर्तनिः द्वे वर्तन्यौ मार्गौ यस्य सः तपस्विमार्गं शूरमार्गं वानुसरतीत्यर्थः अत एव वनेषाट् वने सहते शीतवातादिकं वा रक्षसां वधं कर्तुमुत्सहते वा वनेषाट् यत् यो राजा ऊर्ध्वा ऊर्ध्वीकृता श्रेणिः सोपानपद्धतिः नइवार्थे ऊर्ध्वं स्थानं जिगमिषूणामयं श्रेणिवदालंबनभूत इत्यर्थः॥ की-

द्दशः शिशुः अल्पवया अपि दन् दमयन् अर्थात् शत्रूनिति लभ्यते मक्षु सम्यक् यस्तं शेऽवृधं सुखे
वर्धयितारं स्थिरं अचलस्वभावं माता कौसल्या सूत असूत अडभावश्छांदसः॥ ४२ ॥ वनेषाळित्युक्तं
॥ ३२ ॥ तत्र अयोध्याया रामाय दीयमानं राज्यं भरताय देयं रामश्च वनं प्रति प्रस्थापनीय इति कैके-
यीचरित्रं निमिषं तदाह मध्येति अर्भके संग्राममनिमित्तं मध्यामध्यस्थाभ्यां मंथराकैकेयीभ्यां

**मध्या यत्कर्त्वमभवदभीके कामं कृण्वाने पितरि युवत्यां॥ मनानग्रे तोजहतुर्वियन्ता सानौ निषिक्तं सुकृतस्य योनौ ॥ ४३ ॥**

यत्कर्त्वं कर्तव्यं अभवत्तदपि त्वत्तएव जातमिति पूर्वोदाहृतादयं स्तुत इत्येतस्मादपकृष्यते कस्मिन्सति
पितरि दशरथे युवत्यां कैकेय्यां निमित्तभूतायां कामं तस्यै वरप्रदानं कृण्वाने संपादयति वियन्ता
विदेशं गच्छन्तौ रामलक्ष्मणौ रेतस्तत्प्रदातारं पितरं जहतुः त्यक्तवन्तौ कीदृशं रेतः मनानक् मनसा
न अंचति प्रकाशत इति मनानक् रामगमनं अनिच्छत् निर्मनस्कं मृतमिति वा अत एव सुकृतस्य
योनौ सत्ये निषिक्तं सानौ महत्युच्चस्थाने स्वर्गे वापक्षे निहततृष्णाताटिकस्य निरस्तकर्तृत्वाभि- ॥ ३२ ॥
मानमारीचस्य हतफलासंगसुबाहोः विदिताध्यात्मविद्याबलातिबलस्य बोधि शुभतनवासनाहिल्यस्य

तोषितधर्मगौतमस्य तृणीकृतब्रह्मलोकधनुषोलब्धसीताश्रद्धस्य बाधितब्राह्मलौकैश्वर्यजामदग्न्यतपसोप-रोक्षबोधलक्ष्मणज्येष्ठस्यापरोक्षबोधरामस्य देहायोध्यायां वस्तुमिच्छतः सानुजश्रद्धस्य प्रवासं भरत जीवस्य च तत्र राज्यमिच्छंतीभ्यां भोगदेहवासनाभ्यां मंथराकैकयीभ्यां मध्यस्थाभ्यां यत्कर्तव्यं मनोदशरथस्य वचनं कामरावणवधनिमित्तं तत्राप्यन्तर्याम्यनुग्रहएव हेतुः ततः सश्रद्धे द्विविधेपि बोधे मनस्तोऽपगते मनः स्वर्गपरमभूदिति । अयं मंत्रोयोग्यत्वादुपन्यस्तः ॥ ४३ ॥ रामे वनगते यद्वृत्तं तदाह । दंडा इवेति । भरताः भरतशत्रुघ्नादयः गोअजनासः गवांचालकाः दंडाः यष्टय इव अ-

**दंडा इवेद्गोअजनास आसन्परिच्छिन्नाभरताअर्भकासः ॥**
**अभवच्च पुरएतावसिष्ठआदित्तृत्सूनां विशोअप्रथंत ॥४४॥**

किंचित्कराः आसन् परिच्छिन्नाः अल्पाः यतोऽर्भकासः कनिष्ठाः तेषां च पुरएता पुरोहितो वसिष्ठोऽभवत् आदित् अस्माद्वसिष्ठादेव तृत्सूनीति तृप्सूनां वर्णलोपविकारावार्षौ रामदर्शनेनैव तृप्तिमिच्छतां विशः प्रजाअप्रथन्त प्रथांगता भरतादिषुराज्यमनिच्छत्सु वसिष्ठ एव राज्यं चकारेत्यर्थः बोधार्थी जीवः शास्त्रगुर्वधीनोऽसंगः सन् दैहिकं कर्माकरोदित्यर्थः ॥ मंत्रोयं स्पष्टलिंगः ॥ ४४ ॥

वनं प्रति प्रस्थितं राममनुगच्छन्विश्वामित्रो मध्येमार्गमागतः नदीः प्रार्थयते ॥ ओ॰ष्विति ॥ भोः स्वसारो
भगिनीतुल्याःसिन्धवोनद्यः ओषु अत्यन्तं सुष्ठु शृणोत मदीयं वचनं शृणुध्वं । कारवे करोतीति कारुः
 महतःकार्यस्य रक्षोवधादेःकर्ता तस्य प्रीत्यर्थमित्यर्थःस हि दूतात् अनसा चेष्टावता रथेन वःयुष्मान् प्रति

**ओषुस्वसारः कारवे शृणोत ययौ वो दूरादनसारथेन । निषूनम-**
**ध्वं भवतासुपारा अधो अक्षाः सिन्धवः स्रोत्याभिः ॥ ४५ ॥**
**अतारिषुर्भरतागव्यवः समभक्त विप्रः सुमतिं नदीनां । प्रपिन्व-**
**ध्वमिषयन्तीः सुराधाआवक्षणाः पृणध्वं यातशीभं ॥ ४६ ॥**

ययौ आगतवान् ॥ अत एव निषू नितरां सुष्ठु नमध्वं नतिं भजध्वं स्रोत्याभिः क्षुद्रनदीभिः सह सुपाराः
सुगमपाराः अधो अक्षः रथाक्षादधोवाहिन्यश्च भवत रामायणे तु नौकया नदीतरणमुक्तं तदपि श्रुत्य-
न्तरमूलकं कल्पान्तरविषयमिति ज्ञेयं ॥ ४५ ॥ एवं नदीः समुत्तीर्य चित्रकूटं प्रतिगते रामे भरतः
किमकरोदित्यत आह ॥ अतारिषुरिति । गव्यवः गवा पृथिव्या युवन्ति वियुज्यंत इति गव्यवः यौति- 

रत्रामिश्रणार्थः राज्यं त्यक्तवन्त इत्यर्थः ईदृशाः भरताः नदीनां नदीः अतारिषुस्तीर्णवन्तः तत्रापि विप्रो भरद्वाज इति पुराणात् सुमतिं शोभनमतिं भरतं समभक्त सम्यक् सेवितवान् तस्यातिथ्यं कृतवा-नित्यर्थः तदेवाभिनयति प्रेति भो शिष्याः इषयन्तीः इच्छन्त्यः प्रीतिमत्यः सुराधाः बहुसंपदः शोभनाः सिद्धयः प्राप्तिप्राकाम्यादयः ताः प्रपिन्वध्वं प्रकर्षेण पुष्टाः कुरुत वक्षणाः घृतकुल्याः मधुकुल्याश्च आपृणध्वं पूरयत ततश्चशीभं ईश्वरत्वाभिमानिनं भरतं यात आतिथ्येन गच्छतेत्यर्थः ॥ ४६ ॥ ततो रामं प्रति गत्वा भरतः किं चकारेत्यपि विश्वामित्रवाक्यादेवावगतं तदाह ॥ यदं-

यदंगत्वा भरताः संतरेयुर्गव्यन् ग्राम इषित इन्द्रजूतः ।
अर्षादह प्रसवः सर्गतक्तआ वो वृणे सुमतिं यज्ञियानां ॥ ४७ ॥

गेति । हे अंग महानदि यत् यतः त्वा त्वां भरताः संतरेयुस्तीर्णाः तत्तां वः । वत्वं पूजायां । यज्ञि-यानां तव यज्ञार्हायाः सुमतिं शोभनां मतिं नतिकरीं आवृणे प्रार्थये यैः भरतैः गव्यन् गां नंदिनं आत्मन इच्छतीति गव्यन् नंदिस्वामिको ग्रामः नंदिग्रामः इषितः अभीप्सितो वासार्थं नत्वयोध्ये-त्यर्थात् सोपि ग्रामः इन्द्रजूतः इन्द्रेण रामेण प्रेरितः तत एव प्रसवः रामस्याज्ञा अह प्रसिद्धं अ-

 षांत् गतवती सर्वत्राप्रतिहतोभूदित्यर्थः कीदृशो ग्रामः सर्गतक्तः सृज्यत इति सर्ग आज्ञप्तो भरतः 
तक्तः कृच्छ्रेण जीवितो यस्मिन् स सर्गतक्तः नंदिग्रामे व्रतकृशो भरतो रामाज्ञया राज्यं चकारेत्यर्थः
॥ ३४ ॥ ॥ ४७ ॥ ततो लक्ष्मणार्थं प्रार्थयन्तीं शूर्पणखां रामोवचोभंग्यन्तरेण निरस्याति । नहीति । स लक्ष्मणः

**नहि षस्तव नो मम शास्त्रे अन्यस्य रण्यति। यो अस्मान्वीर आनयत्॥४८॥**
**इन्द्रश्चिद्घातदब्रवीत्स्त्रिया अशास्यं मनः। उतो अहक्रतुं रघुं॥४९॥**

हि निश्चितं तव शास्त्रे आज्ञायां न रण्याति न चलति मम अन्यस्य वा शास्त्रे नो नैव रण्याति
कुतः यो वीरोऽस्मान् आनयत् एतदधीना वयं न त्वयमस्मदधीन इत्यर्थः ॥ ४८ ॥ एवमुक्तापि
सा यदाऽतिनिर्बन्धान्न निवर्तते तदा राम आह। इन्द्र इति । चिद्घेत्यनर्थकौ निपातौ एवं उतो अहे-
त्येतावपि । इन्द्रो रामः तत् वक्ष्यमाणं वचः रघुं लक्ष्मणं अब्रवीत् किमब्रवीत् स्त्रिया मनो अशा- ॥ ३४ ॥
स्यमिति । कीदृशं रघुं क्रतुं कृणोति हिनस्तीति क्रतुस्तं शूर्पणखामेव तां हन्तुमिच्छंतं ॥ ४९ ॥

पुनः किमब्रवीत्तदाह । सप्ती इति । सप्ती अश्वौ ॥ तेन तयोरुच्चैःश्रवस्त्वेनास्या उच्चौ कर्णौं लक्ष्येते मदच्युता मदस्राविणौ मिथुनौ रथं शरीरं वहतः गाढांधकारे हि श्रोत्रबलेनैव दूरस्थमाह्वयितारं गच्छन्ति शब्दवेधिनश्च शत्रून्विध्यन्ति चिद्वेत्यनर्थकौ तथा वृषणोवर्षुकस्य मदस्राविणः धूरिवधूर्नासावंशः उत्तराश्रेष्ठतरा एवेदिति एवमेवेति छेदनाभिनयः प्रदर्श्यते ॥ अस्याः कर्णनासमेव

सप्तीचिद्वा मदच्युता मिथुनावहतोरथं । एवेद्धूर्वृष्णउत्तरा ॥ ५० ॥
अधः पश्यस्वमोपरि संतरां पादकौ हर । माते
कशप्लकौ दृशन्स्त्री हि ब्रह्मा बभूविथ ॥ ५१ ॥

छेत्तव्यं न त्वियं हंतव्येति सूचितमात्रे लक्ष्मणस्तत्कृतवानित्यर्थः ॥ ५० ॥ ततस्तान्निमित्तविघ्नसंभावनया रामः सीतामनुशास्ति अध इति ॥ हे सीते त्वं अधः पश्यस्व न तु तिर्यक् संमुखं वा पुरुषान्तरदर्शनं परिहरस्वेति भावः ॥ मोपरि उपर्यपि मा पश्यस्व तत्रापि खेचराणां दर्शनस्य संभाव्यमानत्वात् पादकौ पादौ संतरां अतिसम्यक्तया विनयेन हर चालय ते तव कशप्लकौ गुल्फौ मा दृशन् मा दृश्यौ भूतां ॥ हि यस्मात्स्त्रीस्वावयवद्वारेण ब्रह्मवित् बभूविथ पूर्वं जाता

संयमवत्यां ब्रह्मविदुत्पद्यते व्यभिचारिण्यां तु दुरात्मातोवंचकेभ्यो राक्षसेभ्यः आत्मानं पाहीति 
भावः पक्षे विषयस्पृहया बाध्यमानेपरोक्षबोधेऽन्तर्यामिप्रेरितः तद्धेतुविषयघ्राणश्रवणे छिन्नवान् ॥ ९१ ॥
॥ ३६ ॥ ततः शूर्पणखां विरूपितां दृष्ट्वा तद्वयरामलक्ष्मणवधार्थमागतान् खरदूषणत्रिशिरस्संज्ञान् रामो जघाने-
त्युच्यते । कं नश्चित्रीयेण मंत्रेण ॥ स एव रामः दासं लोकान् उपक्षिण्वन्तं दूषणं तु वीरवं महा-

स इद्दासन्तु वीरवं पतिर्दन्षळक्षं त्रिशीर्षाणं दमन्यत् ॥ अस्य
त्रितो न्वोजसा वृधानोविपा वराहमयोअग्रयाहन् ॥ ९२ ॥

स्वनं खरं षडक्षं त्रिशीर्षाणं नेत्रषट्कवन्तं त्रिशिरसं च पतिः पाता दन् दुष्टानां दमकः दमन्यत्
दमितवान् हतवान् अस्यैव दूषणादिहन्तुः विशिष्टेन ओजसा बलेन वृधानो वर्धमानः त्रितोनाम
अंगुल्या अयोअग्रया अयोवत्तीक्ष्णनखया वराहं महान्तं बराहाकारं दानवं हन् हतवान् अयं खलान्
हंतीति किं चित्रं अनेनानुगृहीता अपि तान् प्रंतीत्ययमेवाभयकामैराराधनीय इति भावः ॥ ९२ ॥ ॥ ३६ ॥
एवं खरादीन्हत्वा स्थितं रामं देवाःस्तुवन्ति तां सुतीयेन मंत्रेण । यदचर इति ॥ हे इन्द्र

जनेषु जनस्थानेषु तन्वा शरीरेण वावृधानो महयिमानः बलानि सामर्थ्यानि प्रब्रुवाणः कथयन् रक्षांसि निघ्नन् यदचरः संचारं कृतवानसि यानि च युद्धान्याहुः पौराणिकाः सा ते तव मायेत् मायैव यतस्त्वं अद्यपुरा वा शत्रुं शातनीयं ननु निश्चितं न विवित्सनं

यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु ॥ मायेत्सा तो यानि युद्धान्याहुर्नाद्यशत्रुं ननु पुरा विवित्से ॥ ५३ ॥
स्त्रियं दृष्वाय कितवं ततापान्येषांजायां सुकृतं च योनिं ॥ पूर्वाह्णे अश्वान्युयुजेहि बभ्रून्सो अग्नेरन्ते वृषलः पपाद ॥ ५४ ॥

जानासि सर्वेषामंतरात्मत्वादिति भावः अत्र खरो मानः दूषणो मत्सरः त्रिशिराः धनविद्याभिजनजस्त्रिविधो मदः तान् स्पृहासहितान्निघ्नन्योगी मायामात्रं जगदिति पश्यतीत्यर्थः ॥ ५३ ॥ इमं वृत्तांतं शूर्पणखामुखादाकर्ण्य रावणः किं चकारेत्यत आह । स्त्रियमिति । स्त्रियं निकृत्तकर्णनासं । शूर्पणखां दृष्वाय दृष्ट्वा कितवं कपटमृगसन्न्यासिवेषधारिराक्षसद्वयं कर्तृ स्त्रीदर्शनेन क्षुब्धं सत् अन्येषां अन्यस्य रामस्य जायां सीतां सुकृतं अग्निहोत्रादिकं योनिं वंशं च ततापं तापितवत् जाया

 हरणेनैव अयमपि तत्तमभूदित्यर्थः हि यतः बभ्रून् अश्वान् पूर्वाह्णे एव युयुजे रथे तेन च रथेन वृषलो 
धर्मद्रोही रावणः अग्नेरन्ते रामाग्निशालासमीपे पपाद जगाम मारीचेन सहेति शेषः ॥ ५४ ॥ ततो हत
॥ ३६ ॥ मारीचं राममृषिःस्तौति ॥ इन्द्रमिति । हे इन्द्र तुभ्यमित् तवैव वीर्यं सामर्थ्यं अनुत्तं क्वचिदप्यपरा-

इन्द्र तुभ्यमिदद्रिवोनुत्तं वज्रिन्वीर्यं ॥
यद्ध त्यं मायिनं मृगंतमुत्वं माययावधीरर्चन्ननु स्वराज्यं ॥ ५५ ॥
योवःसेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव ॥ तस्मै
कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि ॥ ५६ ॥

भूतं हे अद्रिवः अद्रिं रुद्रचापरूपं मेरुं वाति हिनस्तीत्यद्रिवः हे वज्रिन् अत्यादरेण बहुकृत्वः संबोधयति । यत्यतः ह प्रसिद्धं त्यं परोक्षं मायिनं मृगं मारीचं त्वं मायया मानुषदेहरूपयाऽवधीर्हतवानसि यतः स्वस्य राजोचितं कर्म अन्वर्चन् स्ववंशपरंपरागतमनुपूजयन् राज्ञां मृगया उचि ॥ ३६ ॥
तेत्येव हतवानसि न तु द्वेषबुद्ध्या सर्वान्तरत्वात्तवेति भावः ॥ ५५ ॥ ततो दूरस्थे रामे लक्ष्मणे च तदनुयायिनि शून्ये सीतां प्रार्थयानं रावणं प्रति सीता प्राह ॥ योवइति ॥ यो वो रक्षसां महतो

गणस्य सेना नीः यो वा वो महतो व्रातस्य प्रथमो मुख्यो राजा बभूव तस्मै तं कृणोमि निहन्मि शीघ्रमेव नाशयिष्यामि धना भवदीयानि धनानि न रुणध्मि न कांक्षे तदिदं ऋतं वाक्यं दशप्राचीः प्रागादिदिशः प्रति वदामि ॥ ९६ ॥ एवं निरस्तं रावणं सीताहरणोद्यतमालक्ष्याग्निराचिंतयदिनो राजन्निति॥ इनो राजन्निति मनसैव रामं संबोधयति ॥ हे राजन् इनः बलीयान् अरतिः अलब्धका-

इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाँ अदर्शि ॥
चिकिद्विभाति भासा बृहतासिक्नीमेति रुशतीमपाजन् ॥ ९७ ॥
कृष्णां यदेनीमभि वर्पसाभूज्जनयन्योषां बृहतः पितुर्जाम्
ऊर्ध्वं भानुं सूर्यस्य स्तभायन्दिवो वसुभिररतिर्विभाति ॥ ९८ ॥

मसुखः समिद्धः कामाग्निना प्रदीप्तः रौद्रो भयंकरः दक्षाय साहसाय सुषुमान् समर्थः अदर्शि दृष्टः चिकित्वत्सामर्थ्यं जानन्नपि विभाति वैपरीत्येन दीप्यते भासा दीप्त्या बृहता बृहत्या असिक्नीं कालरात्रिमिव कृष्णां रुशतीं दह्यमानां एति आयाति अपाजन् अपसरिष्यन्नेनां चोरयित्वेतिशेषः ॥ ९७॥

कृष्णामिति ॥ स एवं चिन्तयन्नग्निर्यत् यदा कृष्णां कालरात्रितुल्यां एनीं विवर्णी सीतां वर्पसा वारयन् यातीति वर्पः स्वं रूपं तेन कवचेनैतदाच्छादकेन योगबलेन अभ्यभूत् तिरोहितां कृतवान् किंभूतः बृहतः ब्रह्मणःसंकल्पादेवेत्यर्थः योषामन्यां स्त्रियं छायासीतां जनयन् पितुः रामस्य जां जायामिव जायां तदा तां गृहीत्वा अरातिः रावणः ऊर्ध्वं आकाशमार्गं सूर्यस्य दिवः द्युसंबंधिनो देवतागणस्य च वसुभिर्देवताविशेषैः सह तेषां सर्वेषां भानुंकरं हस्तमिति यावत् स्तभायन् स्तंभयन् विभाति रावणेन आकाशमार्गेण नीयमानां सीतां

**स ईं वृषा न फेनमस्यदाजौ स्मदापरैं दपदभ्रचेताः ॥**
**सरत्पदा न दक्षिणा परावृङ्क्ता नु मे पृशन्यो जगृभ्रे ॥ ९९ ॥**

रावणादाच्छेत्तुं कोपि प्रभुर्नाभवदित्यर्थः ॥ पक्षे स्पृहया प्रेरितो मारीचो दंभः रावणः कामः तौ सीतां श्रद्धां दंभोन्मुखतया परोक्षमपरोक्षं च बोधं रामलक्ष्मणाख्यं दूरे कुर्वन्तीं कामो जहार अग्निः यज्ञः स तु तस्याः सात्विकं रूपं गोपितवानित्यर्थः ॥ भद्रो भद्रयेत्यग्निममंत्रेऽग्निः सीतां रामाय समर्पितवानिति दर्शनादेतावपि रामपरौ ॥ ९८ ॥ स इति ॥ स हृतदारो रामभद्रः ईं एनां सीतां निमित्ती-

॥ ३७ ॥

कृत्य आजौ राक्षसैः सह संग्रामे अस्यत् आस्यत् बाणान्प्राक्षिपत् तत्र दृष्टांतः वृषानफेनामिति यथा महोक्षः क्रोधाविष्टः फेनविप्रुषो मुखनासिकेन फूत्कारं कुर्वन्नस्यति तद्वत् तत्र हेतुः दभ्रचेताः स्थूलबुद्धिः आ इति स्मृत्यर्थो निपातः स्मत् अस्मत् परा परोक्षं अपैत् अपगतो दारहर्तेति प्रत्यक्ष श्चेत्स्यात्तर्हि सद्य एव निहतः स्यादिति भावः॥ ततः किं चकारेत्याह सरदिति दक्षिणा दक्षिणप्रदेशं पदान यथाऽश्वादीनां पदमन्विष्यते भूमौ तथा पदेनेव सरत् सीतार्थं इतस्ततो गच्छन् पराचृक् पराभिभूतः शोकेनेत्यर्थः॥ ताः प्रसिद्धाः पृशन्यः पृच्छन्तं नयन्ति इष्टं देशं प्रापयन्ति ते

विधुं दद्राणं समने बहूनां युवानं संतं पलितो जगार ॥
देवस्य पश्य काव्यं महित्वा द्या ममार सह्यः समान॥ ६० ॥

पृशन्यः शुभाशुभफलसूचकाः पशुपक्षिणः मे मां न अनुजगृभ्रे अनुगृहीतवन्तः सीताप्राप्तिसूचकंशकुनमपि न जायत इत्यत्यन्तं शोकं कृतवानित्यर्थः ॥ पक्षे श्रद्धां विना विकलो बोधःदक्षिणेन ऋजुना धर्ममार्गेण श्रद्धाप्राप्तिं स्वाभ्युदयाय कामयत इति छायार्थः॥ अयं मंत्रो मध्यायत्कर्तवीयः ॥ ५९ ॥
॥ विधुमिति ॥ समने संग्रामे विधुं बहूनां शूराणां विधूननकरं दद्राणं द्रावणकरं युवानमपि संतं

 रावणं सीताहर्तारं पलितो वृद्धोपि अग्निममंत्रादरुणपुत्रः सुपर्ण इति गम्यते ॥ तेन जटायुनामा 
पक्षी जगार निगीर्णवान्॥ तर्हि सिद्धं नः समीहितं नेत्याह॥देवस्येति ॥ देवस्य सर्वांत्राक्षसान् जेतुमि
 च्छतः इन्द्रस्य काव्यं क्रान्तदर्शित्वं पश्य यद्यद्यैव रावणो वध्यते तर्हीतरेषां रक्षसां क्षयो न भविता
इत एव रामो निवृत्तो भवेत् तदर्थं यो ह्यः पूर्वे द्युः समान सम्यगचेष्टत रावणाभिभवं कृतवान् सः

**शाक्मना शाको अरुणः सुपर्ण आयो महः शूरः सनादनीळः ॥**
**॥यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुतजेतोत दाता ॥ ६१ ॥**

अद्य परेद्युर्ममार ॥ सर्वराक्षसक्षयार्थं जटायोरपि मरणं देवेन्द्रेणैव संपादितमित्यर्थः॥पक्षेमनो दशरथ
स्य तापशामकत्वात् विवेकजटायुस्तत्सखा सोपि श्रद्धां हरन्तं कामं निरोद्धुं न शशाक प्रत्युत
स्वयमेव नष्ट इत्यर्थः ॥ ६० ॥ शाक्मनेति ॥ सुपर्णो जटायुर्यच्चिकेत यत् ज्ञातवान् अहं रावणं
हत्वा रामाय सीतां दास्यामीति तत् सत्यमित् सत्यमेव न तु मोघं न निष्फलम् मृतस्यापि साधोः 
संकल्पोन्यथा न भवतीत्यर्थः ॥ अतः स्पार्हं स्पृहणीयं वसु सीताख्यं धनं रामो रावणं हत्वा जेता

जेष्यति उतदाता अपि च रक्षोवनस्य कीदृशः सुपर्णः शाक्मना शाकः शक्नोत्यनेनेत्युत्साहेन शक्ति मान् अरुणो रामे रागवान् अरुणपुत्रत्वाद्वाऽरुणः महो महान् शूरः सनात् सर्वदा अनीळः अनिकेतः महायोगीत्यर्थः॥ पक्षे यद्विवेकेन दृष्टं तत्तथैवावसरे प्राप्ते बोधः समर्थयतइति भावः॥ सुपर्णो दूरगामी ॥ ६१ ॥ कथं तत्संकल्पः सत्योऽभूदत आह ॥ ऐभिरिति । एभिः देवैः वृष्ण्या वृष्णां व

ऐभिर्ददे वृष्ण्या पौंस्यानि येभिरौक्षद्वृत्रहत्याय वज्री ॥ ये कर्मणः क्रियमाणस्य मह्नऋते कर्ममुदजायन्त देवाः॥ ६२ ॥

र्षणशीलानां पशूनां चिन्हानि लांगूलवत्त्वचतुष्पादचारित्वादीनि पौंस्यानि पुंसां मानुषाणामिमानि चिन्हानि हस्तादायित्वत्रिकोपवेशित्वादीनि वानरेषु दृष्टानि आददे आददिरे आत्तानि एकत्वमार्ष येभिः यैरुपात्तैश्चिह्नैर्युतो वज्री इन्द्रः वालिरूपी वृत्रहत्याय दंडरूपाय मरणाय औक्षत् रेतःसेकं कृतवान् कापेयीं चलवित्ततां प्राप्य कनिष्ठभ्रातुर्भार्यां दुहितृकल्पां गत्वा वाली वध्यत्वं प्रापेत्यर्थः॥ ये देवाः ऋते कर्म वानरयोनिप्रापकं दुरितं विनापि क्रियमाणस्य करिष्यमाणस्य सेतुबंधनराक्षसवंधादेः कर्मणः

 मह्ना माहात्म्येन उदजायंत वानररूपेण महत्कर्मकर्तुमाविर्भूता इत्यर्थः॥ तैरेव सहायैर्जटायुसंकल्पं रामः 
साधितवानिति भावः॥ पक्षे बोधसहायाः श्रोत्रेन्द्रियादयः ध्यानार्थमंतर्मुखाः वेदान्तश्रवणार्थं बहिर्मुखाश्चे-
 ति ज्ञाऽज्ञचिन्हानि धारयन्ति तत्रापि महानपि बहिर्मुखत्वेन प्रमाद्यति अतोन्तर्मुखतयैव सर्वदा स्थेयमि-
त्यर्थः॥ अस्मिन् पक्षे ऋते कर्म ब्रह्मक्रियमाणस्य कर्मणो योगधर्मस्य माहात्म्येन देवाःसाधकाःउदजायन्त
ब्रह्मभावं गता इति योज्यं॥ ६ २॥ सुग्रीवसख्यात्प्राक् कबंधवधमाह नीचीनेति॥ योविश्वस्य भुवनस्य

**नीचीनबारं वरुणः कबंधं प्रससर्ज रोदसी अंतरिक्षं ॥**
**तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥ ६३ ॥**

राजा रोदसी अंतरिक्षं च प्रससर्ज सः नीचीनबारं अधोद्वारं वक्षोमुखं कबंधं नाम राक्षसं वरुणो
वृण्वानो भूत्वा तेन कबंधेन भूम भूमिं व्युनत्ति आर्द्रं करोति तस्य शोणितैरितिभावः॥ वृष्टिर्यवंन यव- 
मिवेत्यार्द्रीकरणे दृष्टान्तः ॥ ६३ ॥

वानरैःसह रामस्य सख्यप्रसंगमाह ॥ भीतायेति ॥ अत्रेदं पुराणान्तरे उपाख्यायते जांबवान् ब्रह्म णोंश ऋक्षराजो ज्ञातिभिर्निरस्तः स्वं राज्यं प्राप्तुं तपश्चकार तं च द्वौ युवानावागत्य ऊचतुः आवा भ्यामाप्यायितस्त्वं शत्रून् जेष्यसीति स पुनस्तयोर्ज्येष्ठाय स्वदुहितरं दातुकामो यावत्किंचिद्विवक्षति तावदेवान्तर्हितौ तावेव पुनस्त्रेतायुगे सुग्रीवसहितः सन्ददर्श तदा तौ दृष्टपूर्वौ प्रत्यभिज्ञाय सुग्रीवमुप

भीताय नाधमानाय ऋषये सप्तवध्रये ॥
मायाभिरश्विना युवं वृक्षं संचविचाचथः॥ ६४ ॥

दिदेश एताभ्यां सख्यं कुरु एतौ तव कार्यं साधयितुं क्षमाविति ततः सुग्रीवो हनुमद्द्वारा रामेण सह सख्यं चकार ज्येष्ठभ्रातुः राज्यं तेन हृतान्स्वदारांश्चेच्छन् इति ॥ तत्र जांबवानार्तो भक्तः सुग्री वस्त्वर्थार्थी हनूमांस्तु निष्कामः एतेषां क्रमेण रूपाण्याह भीतायेति भीताय ज्ञातिभ्यः यतः नाध मानाय उपतप्ताय ऋषये भूतपूर्वगत्या ब्रह्मणे सर्वमंत्रद्रष्ट्रे सप्तवध्रये वध्रिश्चर्मरज्जुः सप्तसंख्याः

त्वगसृङ्मांसमज्जास्थिमेदःशुक्रसंज्ञा धातवः एव वध्रिरूपाणि बंधनानि यस्य तस्मै सप्तवध्रये पार्थिवं पशुदेहं प्राप्ताय मह्यं मामनुगृहीतुं भो अश्विना अश्विनीकुमारवदतिरमणीयौ तच्छरीरोपाधिकौ

॥ ०४ ॥ वा सूत्रान्तर्यामिणौ मायाभिः मायाकृतेन मानुषवेषेण युवं युवां वृक्षं मदाश्रितं तपःस्थानभूतं समचथः समागतौ च अनंतरं मय्यनुग्रहं कृत्वा व्यचथश्च विगतौ च झटित्येवादर्शनं गतौ॥ अयं मंत्रः सकामभक्तानां गतिर्विलंबेन भवतीति प्रकाशयति तथाविधश्च जांबवानिति योग्यत्वात्प्रकृतोपयोगि कथासूचकत्वाच्चोपन्यस्तः यद्वापुर्यष्टकेन प्राणज्ञानेन्द्रियकर्मेन्द्रियमनोभूततमःकामकर्मात्मकेन सर्वे बद्धाः एते ऋक्षवानरास्तु ऋते कर्ममुदजायंत देवा इत्युक्तेः कर्मबंधहीनत्वात्सप्तवध्रयः यद्यपि संयोगा विप्रयोगांता इति न्यायेन व्यचथ इत्यवक्तव्यं लोकतः परमार्थतोपि सकृद्विभातो ह्येष इति श्रुतेः सकृद्दृष्टस्यात्मनो वियोगासंभवस्तथापि जांबवतः कामग्रस्तत्वाज्जातमपि दर्शनं न कृतकृत्यता

मनयदिति ज्ञापनार्थं व्यचथ इति अत एव रामावतारेपि भगवान्न जांबवतो जामातृत्वमंगीचकार ॥ ४० ॥

एकपत्नीव्रतव्याजेन किं तु कृष्णावतारे विलंबेनेति स्मर्यते ॥ ६४ ॥

मे मह्यं पूर्वं देहि पश्चादहं सुग्रीवस्तु पूर्वस्वार्थः पश्चादाराधनमित्यक्रमेण भजमानः प्राकृतस्तत्स्वरूपमाह मंत्रो देहि म इति ॥ ते तुभ्यं ददामि तथा मे मदर्थं निधेहि अहमपि ते निदधे इति पूर्ववत् ॥ तथा निहारं प्रेषणीयं द्रव्यं मे मह्यं इत् एव पूर्वं हर प्रापय पश्चादहं ते तुभ्यं निहारं निहरामि प्रापयामि भृत्यद्वारा एवं प्रार्थितो रामः सुग्रीवं पूर्वमनुगृह्य पश्चात्ततः स्वकार्यसिद्धिमकामयतेत्यर्थः ॥ ६५ ॥ एवं सकामौ जांबवत्सुग्रीवावनुगृह्य निष्कामे हनुमत्यनुग्रहं चिकीर्षु रामं हनूमानाह ॥ एवाहीति ॥ एव एवं शास्त्रदृष्ट

देहि मे ददामि ते निमेधेहि न ते दधे ॥
निहारमिन्मे हर निहारं निहरामि ते ॥ ६५ ॥
एवा हि त्वामृतुथा यातयंतं मघाविप्रेभ्यो ददतं शृणोमि ॥
किंते ब्रह्माणो गृहते सखायोये त्वा या निदधुःकाममिन्द्र ॥ ६६ ॥

रीत्या हि निश्चितं त्वां ऋतुथा काले काले यातयंतं अंतर्यामितया यज्ञादौ विषये यत्नं कारयन्तं तत्फलभूतानि मघा मघानि धनानि च विप्रेभ्यः श्रद्धावद्भ्यो ददतं शृणोमि परन्तु किं कथं ते त्वत्संबं-

 धिनो ब्रह्माणो ब्राह्मणाः माहशाः गृहते गृह्णन्ति आपितु दीयमानमपि न गृह्णन्तीत्यर्थः सखायो नि- 
ष्कामदासाः अत एव येत्वा या त्वयि कामं निदधुः त्वत्काम्ययैव सर्वमहं करोमि न त्वत्तोन्यद्वां-
॥ ४१ ॥ च्छामीत्यर्थः॥ इदं मंत्रत्रयं कथानुपयुक्तगुणकथनपरत्वात्प्रसंगादुपन्यस्तं ॥६६॥ देहि मे ददामि त
इति वदतःसुग्रीवस्य कार्यं वालीवधाख्यं येभिरौक्षद्वृत्रहत्याय वज्रीति सूचितं पूर्वमेव कृत्वा
रामः स्वकार्यं चिन्तयते । कथा देवानामित्यादिना ॥ कथा केव प्रकारेण शृण्वतां

**कथादेवानां कतमस्य यामनि सुमंतुनामशृण्वतां मनामहे ॥**
**कोम्टळाति कतमोनो मयस्करत्कतमऊती अभ्यावव्र्त्तति॥ ६७ ॥**

मद्वाक्यमाकर्णय तां देवानां वानररूपाणां मध्ये कतमस्य नामस्वरूपं सुमंतु शोभनतया मंतव्यं
मनामहे जानीमहे यामनि सीताप्रवृत्त्यर्थे गमने विषये को नोऽस्मान् मृळाति सुखयेत् क-
तमोवा नोऽस्माकं मयः सुखं करत् कुर्यात् कतमो वा ऊती अस्मदीयां विभूतिं सीताख्यां श्रियं ॥ ४१ ॥
अभ्यावव्र्तति अभ्यानयति तं न जानीमः इति भावः ॥ ६७ ॥

क्रतवः साक्षात् सत्यसंकल्पा इत्यर्थः ॥ क्रतूयंति क्रियामात्मन इच्छंति अस्मत्सेवां कर्तुमिच्छन्ति हृत्सु धीतयःहृदयेषु धीमन्तःवेनंति शोभन्ते वेनाःकमनीया आसमंतात् दिशःपतयन्ति गच्छंति ॥एभ्यो वानररूपेभ्यो देवेभ्योऽन्यो न मर्डिता सुखयिता न विद्यते मे मम कामाः मनोरथाः देवेषु एषु अ-

क्रतूयंति क्रतवो हृत्सु धीतयो वेनंति वेनाः पतयंत्यादिशः ॥
न मर्डिता विद्यते अन्य एभ्यो देवेषु मे अधिकामा अयंसत ॥६८॥
तेनोअर्वन्तो हवनश्रुतो हवं विश्वे शृण्वंतु वाजिनो मितद्रवः ॥
सहस्रसा मेधसाताविव त्मना महो ये धनं समिथेषु जभ्रिरे ॥ ६९ ॥

यंसत अपूर्यन्त ॥६८॥इत्यादि चिन्तयित्वा वानरान्प्राति वदति॥ तेन इाति ते अर्वन्तः शीघ्रगतयो वाजिनो वानराः नोऽस्माकं हवं आह्वानं शयावंतु शृण्वन्तु कीदृशाः हवनश्रुतः हवनं शृण्वंति ते तथा विश्वे सर्वे मितद्रवः परिमितगतयः ये त्मना आत्मना सहस्रसाः सहस्रैः संमितस्य धनादेः संभक्तारः मधे

मंत्र- सातािवव यज्ञे इव समिथेषु संग्रामेषु महः महनीयम् धनं शत्रूणां वित्तं जभ्रिरे हृतवंतः यज्ञे ऋत्वि रामायणं.
ज इव स्वभूतमितिभावः ॥ ६९ ॥ भो देवाः वःयुष्माकं मध्ये वायुं वायुपुत्रं रथयुजं देहधरं
॥ ४२ ॥ पुरः धीयत इति पुरःसरं स्तोमैः स्तुत्या कृणुध्वं संख्याय सखिवत् कार्याय पूषणं पोषणं मत्का
र्यार्थमिमं स्तुवध्वमित्यर्थः॥हि यतःतेस्तामासः सवितुर्देवस्य सवीमनि प्रसवे लोके ऋतुं संकल्पं सचं

प्रवो वायुं रथयुजं पुरंधिं स्तोमैःकृणुध्वं सख्याय पूषणं ॥
ते हि देवस्य सवितुः सवीमानि क्रतुं सचंते साचितः सचेतसः॥७०॥
त्रिःसप्त सस्रा नद्यो महीरपो वनस्पतीन्पर्वताँ अग्निमूतये ॥
कृशानुमस्तॄन् तिष्यं सधस्थ आ रुद्रं रुद्रेषु रुद्रियं हवामहे॥ ७१॥

ते संपादयंति सचितः चेतनस्य पुंसः सचेतसःसहृदयस्य स्तुतयःसहृदयं कार्ये प्रवर्तयंतीत्यर्थः ॥ ७०
त्रिरावृत्ताः सप्त त्रिःसप्त एकविंशतिः सस्राः सरंत्यः नद्यः नदीः महिरयः समुद्रं वनस्पतीन् ॥ ४२ ॥
पर्वतान् अग्निं च वाडवं ॥ तथा कृशानुं कल्पांताग्निं अस्तॄन् अस्यंति क्षिपंति तान् शेषका

लाम्रिरुद्रादीन् तिष्यं पुष्योपलक्षितं नक्षत्रमंडलं च सधस्थे सहतिष्ठंत्यस्मिन्निति सर्वलोकावासे कृत्स्नब्रह्मांडे आसमंतात्स्थितं वस्तुजातं प्रति रुतं शब्दं कुर्वन्नेव द्राति गच्छति गर्जन्नेव ब्रह्मांडपिंडमाक्रांतुं शक्तो रुद्रस्तं हनुमद्रूपं रुद्रेषु मध्ये रुद्रियं रुद्रकर्मार्हं शत्रुसंहारक्षमं हवामहे ऊतये स्वकार्यसमृद्धये स्वेष्टसिध्यर्थमित्यर्थः ॥ ७१ ॥ एवमाज्ञप्तस्य हनुमतो रूपं वर्णयति अपश्य-

**अपश्यमस्य महतो महित्व ममर्त्यस्य मर्त्यासु विक्षु ॥**
**नाना हनू विभृते संभरेते असिन्वती बप्सती भूर्यत्तः ॥७२॥**

मिति । अपश्यमस्य महतो महित्वं माहात्म्यं अपश्यं दृष्टवानस्मि मर्त्यासु विक्षु मर्त्यलोके एवाऽस्य समुद्रं क्रामतो रूपं दृष्टवानस्मि तथाऽस्य हनू मुखफलके नाना पृथक् विभृते विहृते व्यात्तं मुखं चाऽपश्यमित्यर्थः ॥ ते एव हनू संभरेते संहरेते विश्वस्य संहारं कुरुतः असिन्वती अबध्नन्ती अन्योन्यमस्पृशंत्यौ बप्सती ललमाने भूरि बहुलं अत्तः भक्षयतः ॥ प्रश्वासवेगेनैव सर्वमस्योदरे प्रविशति न तु हन्वोर्मेलनेनेति भावः ॥ ७२ ॥ अस्य शिरो गुहा गुहायां निहितं वानररू-

मंत्र- पत्वाच्छिरोऽत्यल्पमित्यर्थः ॥ तथा अक्षी अक्षिणी ऋधक् तले निहिते गभीरे इत्यर्थः ॥ असिन्वन् रामायणं.
मुखफलके अबध्नन् असंयोजयन्नेव वनानि जलानि वनस्थानि फलादीनि वा जिव्हयैवातिदीर्घी-
॥ ४३ ॥ कृतयाऽत्ति भक्षयति अस्मै अत्राणि अमत्राणि वर्णलोपश्छांदसः भोजनपात्राणि अन्नपूर्णानि पड्भिः
दूतैः संभरंति देवाः सीताज्ञया खलु यक्षा एनं सेवन्त इति भारते दृष्टं ॥ विक्षु प्रजासु अधि उपरि स्थिताः

गुहाशिरो निहितमृधगक्षी असिन्वन्नत्तिजिव्हया वनानि ॥
अत्राण्यस्मै पड्भिः संभरंत्युत्तानहस्ता नमसाऽधि विक्षु ॥ ७३ ॥
प्रमातुः प्रतरंगुह्यमिच्छन्कुमारो न वीरुधःसर्पदुर्वीः ॥
ससं न पक्वमविदच्छुचंतं रिरिह्वांसं रिप उपस्थे अंतः ॥ ७४ ॥

गंधर्वादयः नमसा नमस्कारेण निमित्तेन उत्तानहस्ताः बद्धांजलयो भरंतीति संबंधः ॥ ७३ ॥ प्रमातुरिति। य
थापुष्पा धन्वेषणपरःकुमारो वरुिध ओषधीःप्रसर्पति एवं हनूमान्मातुःसीतायाःसकाशात् प्रकृष्टतरं गुह्यं ॥ ४३ ॥
गुह्यसंदेशं इच्छन् उर्वीः भूप्रदेशान् प्रसर्पन् प्रासर्पत् ससं सस्यक्षेत्रं पक्वमिव नेत्युभयत्रोपमार्थे तद्वत्-

पांडुरमित्यर्थः ॥ यतः शुचन्तं शोचन्त सीताया आत्मानं अविदत् शोकेन लिंगेन पक्कक्षेत्रच्छायया च ज्ञातवान् रिरिव्हांसं लेलिहानं रावणं ग्रसितुमित्यर्थात् रिपः पृथिव्या अंतर्मध्ये उपस्थे गुप्ते स्थाने स्थितमिति शेषः ॥ प्रमातुः प्रतरं गुह्यमिच्छन्नित्युतरमंत्रे प्रकर्षेण तीर्त्वा मातुर्गुह्यमिच्छ-न्निति लिंगाद्धनू गुहा शिर इत्यादि लिंगाच्च सीतान्वेषणार्थं समुद्रं तर्तुकामस्य हनुमतएवैतद्रूपं

इषुर्न धन्वन्प्रतिधीयते मतिर्वत्सो न मातुरुप सर्ज्यूधनि ॥
उरुधारेवदुहे अग्र आयत्यस्य व्रतेष्वपि सोम इष्यते ॥ ७९ ॥

वर्ण्यत इति सहृदयैरेव ज्ञेयं ॥ ७४ ॥ एवं रूपस्य हनुमतः सीतादर्शनं सीता हनुमतोःसंवादादिकं च वर्ण्यते। इषुर्न धन्वन्नित्यादिना भूयसा प्रबंधेन ॥ तत्रेदं दशर्चं सूक्तं सोमरूपी विष्णुर्देवता । इषुर्बाणो न शब्द उपमार्थे स यथा धन्वन् धनुषि प्रतिधीयते संयोज्यते ।एवं मतिर्मेधावी मतिशब्दस्य मेधावीनाम सु पाठात् मेधावी हनुमानपि प्रतिधीयते प्रेर्यते गगनमार्गेण सीतारूपं लक्ष्यं प्रापयितुमिति भावः ॥ स प्रति इतो ऊधनि गोःक्षीराशये वत्सो न वत्स इव मातुः सीतायाः समीपे स्तनं पातुं शिशुरिव

उपसर्जि उपसृष्टोभूत् न तु बाणवल्लक्ष्यभूतां बिभेदेत्यर्थः ॥ सा च माता अग्रे आयती वत्सस्याभि-
मुखमुपसर्पती गौरिव उरुधारा स्थूलया प्रेमधारया दुहे दुग्धे तं इष्टवाक्येनाप्यायितवती॥ ननु सतीमति-
॥ ४४ ॥ सुंदरीं च सीतामुपसर्पतोस्य चित्तविकारः कथं नासीदित्यत आह ॥ अस्य व्रतेष्विति अस्य रुद्रस्य
व्रतेषु ब्रम्हचर्यादिषु प्रातव्येषु सोमः सोमयागादिकं कर्मवृंदमिष्यते कर्मभिः शुद्धचित्तस्य परवैराग्य
वतः कामविकारशंकैव नास्तीत्यर्थः ॥ ७५ ॥ उपो उपैव समीपे एव मतिर्मेधावी हनुमान् पृच्यते

**उपो मतिः पृच्यते सिच्यते मधु मंद्राजनी चोदते अंतरासनि ॥**
**पवमानः संतनिः प्रघ्नतामिव मधुमान्द्रप्सः परिवारमर्षति ॥ ७६ ॥**

संयुज्यते तेन च मातुः कर्णे मधु मधुरं अमृततुल्यं वाक्यं । जयत्यतिबलो रामो लक्ष्मणश्च महा
बलः । राजा जयति सुग्रीवो राघवेणानुपालितः ॥ दूतोहं कोसलेंद्रस्य राघवस्य महात्मन इत्यादिकं
सिच्यते श्राव्यते ॥ ततश्च तां हनुमति जातविस्रंभां मातरं मंद्राजनी वाग्देवता अंतरासनि मध्ये ॥ ४४ ॥
मुखे स्थित्वा चोदते वक्तुं प्रेरयति मंद्राजनीशब्दो वाङ्नाम सुपठितः भाष्ये तु मदकरस्य प्रेरयित्री

सोमस्य धारेति व्याख्यातं वाग्देवतया प्रेरिता सा यद्वक्ति तदाह पवमान इति । पुनाति शोधयतीति पवमानःपापनोदन्वेषको विष्णुः एकोपि प्रघ्नतां प्रकर्षेण निघ्नतां कालाग्निरुद्राणां संतनिर्निबिडतरः समुदाय इव द्रप्सः द्रप्सवदुद्रिक्तस्य रावणस्य षष्ठ्याः सु इत्यादेशः परिवारं अर्षति समुदायं गच्छति प्रश्नार्थे लेट् रावणं सपरीवारं भस्मीकर्तुं किमेष्यतीति पप्रच्छेत्यर्थः ॥ कीदृशः पवमानः मधुमान् मयि प्रीतिमान् ॥ ७६ ॥ सिच्यते माध्विन्येतत्प्रदेशांतरस्थेन मंत्रेण विवृणोति ॥ संम्राज इति ॥ ये सम्राजश्चक्रवार्तिनः सुवृधः सुतरां वृद्धिमंतः यज्ञं विश्वामित्रस्य आययुः आगतवंतः अप

संम्राजो ये सुवृधोयज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयं॥ताँ आविवास नमसा सुवृक्तिभिर्महोआदित्याँ अदितिं स्वस्तये॥७७॥

रिह्वृता अकुटिलाः दिवि परशुरामीये स्वर्गलोके क्षयं नाशं दधिरे धृतवंतः ॥ एवं विश्वामित्रयज्ञगमनं परशुरामलोकभंगं चाभिज्ञानमुक्त्वा स्वस्य संम्राट् संबंधित्वमाह तानिति ॥ तान् श्रीरामभद्राख्यान् आदित्यान् आदित्यवंशजान् आवि इत्युपसर्गद्वयसंबंधात् वास इत्यस्यावृत्तिः उवासे

 त्युत्तमैकवचने लिटि अभ्यासलोप आर्षः ॥ तान् आउवास तेषां समीपे वासं कृतवानस्मि नमसा 
नमस्कारेण दास्येनेत्यर्थः ॥ सुवृक्तिभिः सुतरां वृक्तयो वृजिनानि महांति संकटानि तैर्हेतुभिः अदितिं
॥ ४९ ॥ इयं वा अदितिश्रुतेः ॥ पृथ्वीं तज्जां त्वां उद्दिश्य स्वस्तये कल्याणाय त्वां भर्त्रा सह संगमयितुमित्यर्थः॥
विवास प्रवासमपि कृतवानस्मि रामदासोहं त्वामुपागतोस्मीत्यर्थः ॥ पक्षे विष्णुभक्तोहं यज्ञादीनामनि-
त्यफलतां ज्ञात्वा शुद्धबोधोल्लासिनीं श्रद्धां त्वां प्राप्तोस्मीत्यर्थः ॥ अक्षरार्थोपि तथैव योज्यः ॥ ७७॥

**अव्येवधूयुः पवते परि त्वचि श्रथ्नी तेनप्तीरदितेर्ऋतंयते ॥**
**हरि रक्रान्यजतः संयतो मदो नृम्णा शिशानो महिषो न शोभते ॥७८॥**

एवं पवमानः संततिरित्यादिना स्वस्मिन्रामानुग्रहं पृष्ट्वा स्वस्य विशुद्धतां मंत्रद्वयेनाह सीता॥ अव्ये
इति ॥ अव्ये अवीर्नारी रजस्वला तस्यां योग्यं कर्म अव्यं मैथुनं तस्मिन् अव्ये निमित्ते वधूयुः
बध्वा पुत्रभार्यया सह यौति मिश्रीभवतीति वधूयुः दुष्टकामुकोपि रावणः त्वचिपरिपवते शुद्धद्युति ॥ ४९
मदप्रात्यापांडुरो भवतीत्यर्थः ॥ यतः अदितेः अदितिं सीतां मां प्राप्य ऋतं सत्यं ब्रह्मचर्यं एति प्रा-

प्रोतीति यन् तस्मै ऋतंयते रावणाय तत्परिजनः नप्तीः न यतंति स्वर्गादिति नप्तय उर्वश्याद्याः स्त्रियस्ताः श्रथ्नीते शिथिलाः करोति बलादाहरति सीताया अलाभात्तप्यमानं रावणं चिकित्सितुमानीता अपि रंभादयस्तस्मै न रोचंत इत्यवज्ञातास्ता भवंतीत्यर्थः ॥ नन्वीदृशोपि बलात्सीतां कुतो न कामयत इत्यत आह ॥ हरिरिति ॥ हरिः सोमाश्चित्ताधिष्ठाता अक्रान् एनं आक्रांतवान् । यजतः संगतिकर्तॄन् रावणादीन् अत एव तेषां मदस्संयतो निगृहीतःअन्यथा पांडुवन्मरणभयमपि त्यक्त्वा ते परदारानाक्रमेयुः अत एव नृम्णा कामबलेन शिशानो दीप्यमानो महीषो महान् रावणो न शोभते न पुष्यत्यपि तु कृश एव भवति ॥ ७८ ॥ पूर्वोक्तमेव विवृणोति ॥ उक्षेति ॥ उक्षेवोक्षाः रेतः-

**उक्षा मिमाति प्रतियंति धेनवो देवस्य देवीरुपयंति निष्कृतं ॥**
**अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत॥७९॥**

सेचनकामः मिमाति आत्मानं हिनास्ति अन्यत्रारमणात् यतो धेनव इव धेनवः आगताः दिव्यस्त्रियः प्रतियंति परावृत्य गच्छंति तावतैव देवस्य धर्मस्य देवीर्देवांगनाः निष्कृतिं आनृण्यं उपयंति

रावणकृतो धर्मस्तस्मै दिव्यांगनाः समर्प्य कृतार्थोऽभूत् न हि तस्य भोगपर्यंतं व्यापारोस्ति रावणस्तु स्वदो
षान्न भोगभाग भूत् देवदत्तमपि सुखं अधर्माधिक्यान्नश्यतीति भावः।अतीति॥ अर्जुनं कृष्णावतारे अर्जुनवृ-
॥ ४६ ॥ क्षतां प्राप्तं नलकूबरं भावि वृत्या भूतवृत्या वाऽर्जुनशब्दवाच्यं अव्ययं याति मनसा गच्छतीत्यव्ययं रंभा-
संभोगार्थिनं वारं बालं स्वपुत्रं अत्यक्रमीत् वधूयुःरंभाया आक्रमणेनाति क्रांतवान् अतस्तेनशप्तो मरण भ-
यान्न सीतांबलाद्भोक्तुमिच्छति ननुपांडुवन्मरणभयमप्यतिकामुकत्वात्कुतोन त्यजतीत्यत आह॥ अत्क-
मिति॥ सततंगच्छतीत्यत्को नित्य प्रवासी परिव्राट् न शब्द इवार्थे परिव्राजमिव निक्तं निर्णिक्तं सीताविष-
ये दृढब्रह्मचर्यं तं सोमश्चित्ताधिष्ठाता सकलराक्षससंहारमिच्छन् परि परितःचित्तप्रभावात् कामात् अव्य-
त अरक्षत् अतोऽयं मां न स्पृष्टवान् यदि स्पृशेत्तर्हि नलकूबरशापेन सद्यो नश्येदित्यात्मशुद्धिरुक्ता।

**अमृक्तेन रुशता वाससा हरिरमर्त्यो निर्णिजानः परिव्यत॥ दिव**
**स्पृष्टं बर्हणानिर्णिजे कृतोपस्तरणं चम्वोर्नभस्मयं ॥ ८० ॥** ॥४६॥

॥७९॥ अथादृष्टपूर्वी मां त्वं कथं ज्ञातवानिति प्रष्टुमिच्छंती सीतामालक्ष्य हनुमानाह॥ अमृक्तेनेति॥

अमर्त्यः अप्राकृतो हरिर्वानरो मद्रूपी अमृक्तेन असंमार्जितेन मलिनेन रुशता कनकतंतुमयत्वात्सूक्ष्मत्वाच्च दीप्यमानेन वाससा वस्त्रेण वियोगिनी चिन्हेन परिव्यत पर्यवेष्टयत् ज्ञातवानित्यर्थः ॥ कीदृशो निर्णिजानः शोधयन् सीतामन्वेषयन्नित्यर्थः॥ दिवः सुखस्य पृष्ठमिव पृष्ठं उच्चस्थानं यदपेक्षयाऽन्यन्महदानंदस्थानं भर्तुर्नास्ति सर्वेषामानंदानामुपस्थ एकायनमिति श्रुतेः ॥ तादृशं रामस्य कलत्रं त्वां नभस्मयं नभोऽव्याकृतं आकाशः शक्तिर्मायेति पर्यायाः तन्मयं परिव्यतेतिसंबंधः ॥ यत्नुनिर्णिजे कंटकनिरसनेन ब्रह्मांडशोधनाय चम्वोः वानरराक्षससेनयोर्बर्हणा निबर्हणाय भस्मीभावाय उपस्तरणमिव कृतवान् परमेश्वरः अडभावश्छांदसः यथा द्व्यवदानप्रक्षेपार्थिना स्रुचि उपस्तरणं क्रियते तद्वच्चमूद्वयहोमार्थिना धात्रा त्वं निर्मितासीत्यर्थः ॥ ८० ॥ सूर्यस्येवति ॥ यथा सूर्यस्य-

**सूर्यस्येवर श्मयो द्रावयित्नवो मत्सरासः प्रसुपः साकमीरते ॥**
**तंतुं ततं परि सर्गास आशवो नेंद्रादृते पवते धाम किंचन ॥ ८१ ॥**

रश्मयः साकं युगपत् द्रावयित्नवो गमनशीला आशवः शीघ्राश्च एवं मत्सरासः अहमिव सरंतिते मत्स-

रासःमज्जातीयाः हरयो युगपत्सर्वत ईरते गच्छंति प्रसुपः प्रस्वपंति ते प्रसुपः स्थावरालोकास्तान्प्रति इरते कीदृशाः ततं महांतं तंतुं प्रजावैतंतुरिति श्रुतेः॥ प्रजां तद्धेतून् दारानित्यर्थः॥ परि परिमार्गितुं सर्गासः सृज्यंत इति सर्गा निसृष्टाः स्वामिनेति शेषः॥ तेषां मध्ये मयैव त्वं दृष्टासीति वक्तुमशक्नुवन्नाह॥ नेन्द्रादिति॥ इन्द्रादृते इन्द्रानुग्रहं विना किंचन किमपि सत्वं धाम इन्द्रस्यैव गृहं सीतारूपं नपव्रते न शोधनावगच्छति रामानुग्रहात्त्वामहं दृष्टवानस्मीत्यर्थः ॥ ८१ ॥ नेन्द्रादृत इत्युक्तं तदेव स्पष्टयति । सिंधोरिवेति ॥

**सिंधोरिव प्रवणे निम्न आशवो वृषच्युता मदासो गातुमाशत ॥**
**शंनो निवेशे द्विपदे चतुष्पदेऽस्मे वाजाः सोम तिष्ठंतु कृष्टयः॥८२॥**

सिंधोः नद्याःप्रवणे निर्झरप्रपाते इव यथा प्रविष्टाःवृषच्युताः स्वातंत्र्यलक्षणाद्धर्मात् च्युताः प्रवाहवशा भवंति एवमाशवः शीघ्रगामिनोपि वानराः निम्ने नीचे पातालमध्ये प्रविष्टाःसंतः वृषः मासेन सीताशुद्धिमानेष्याम इति स्वप्रतिज्ञात्मवः सेवाधर्मः ततः च्युताः प्रतिज्ञाया अकरणात् नरकंगता इवजाता इत्यर्थः ॥ ते पुनर्मदासः सोमं राजानं स्तुतिभिर्मादयंतः तत्प्रसादाद्गातुं पृथिवीं आशत प्रा-

त्वंतः गातुंपदं पृथिवीनामसु पठितं भाष्येत्वन्यथा व्याख्यातं स्तुतिफलं प्रार्थ्यमानं तावद्दर्शयाति शमिति ॥ हे सोम नः अस्माकं संबंधिनो रामस्य निवेशे गृहे दारेषु शं कल्याण ष्ठतितु सर्वदाऽस्त्वि- त्यर्थः॥तथा नः द्विपदे मानुषे रामादिरूपे चतुष्पदे ऋक्षवानररूपे च शं तिष्ठतु तथा अस्मे अस्मा- कं वाजाः संग्रामाः कृष्टयः शत्रुकर्षणं क्षमा स्तिष्ठंतु उपास्थिता भवंतु एवं प्रार्थनापूर्वकं आनःपव स्वेति तृचेन सोमाभिधं विष्णुं स्तुत्वा तत्प्रसादाद्बिलान्निर्गत्य भूमिं प्राप्ता इत्यर्थः ॥ ८२ ॥ ततो

शुचिःपुनानस्तन्वमरेपऽसमव्येहरिर्न्यधाविष्टसा नवि ॥
जुष्टो मित्राय वरुणाय वायवे त्रिधातु मधु क्रियते सुकर्मभिः ॥८३॥

बिलान्निर्गत्यापि सीतायाः प्रवृत्तिमलभमानानां पुनस्तमेव त्रिरस्मा इत्यादिभिरुत्तरस्य सूक्तस्य दश र्चस्य रेणुदृष्टस्य सप्तभिर्ऋग्भिः स्तुतवतामप्यस्माकं भयमागतमित्याहाष्टम्या ॥ शुचिः पुनान इति ॥ एकवचनं जात्यभिप्रायं शुचिः स्वभावशुद्धोऽपि अरेपसं निष्पापमपि तन्वंतनूं शरीरं पुनानः उपवासैः शोधयन् हरिर्वानरः सानवि सानौ मेरुशिखरे अव्ये संगमे निमित्ते नितरां अधाविष्ट

धावनं कृतवान् प्रतिज्ञाभंगाद्भीतो वानरगणोऽनशनव्रतेन अभयस्थानं ब्रह्मलोकं गंतुं त्वरावानभूदित्य
र्थः॥ततः सुकर्मभिः सुकृतवता संपातिना पक्षिणा बहुत्वं पूजायां त्रिधातु क्लीबत्वं छांदसं वातपित्त
कफात्मकं वानरशरीरं मधु आत्मनो अन्नं क्रियते वर्तमानसामीप्येवर्तमानवन्निर्देशः अतिक्षीणा
नामेषां मध्ये यो यो मरिष्यति तमहं भक्षयिष्यामीति मनस्यकरोदित्यर्थः ॥ कीदृशास्त्रिधातुः जुष्टः
मित्रादीनां प्रीत्यर्थं सम्यगेतैः सेवितस्तर्पितःतथाहि सुपक्कमाहारं भुंजानस्याऽपि देहवतोग्निस्तुष्यति
सुरसंभुंजानस्य रसनादेवता वरुणस्तुष्यति सुस्पर्शं वसनं वसानस्य त्वग्देवता वायुस्तुष्यति ॥ ईदृ-
शानां देहानां भक्षणेनाहं शुद्धः पुष्टश्च भविष्यामीति संपातेराशयः ॥ ८३ ॥ तं च जिघत्सु-

**॥ पवस्व सोम देववीतये वृषेन्द्रस्य हार्दि सोमधान माविश ॥**
**पुरा नो बाधाद्दुरितातिपारय क्षेत्रविद्धि दिश आहाविपृच्छते ॥८४॥**

मायांतं अभिप्रेक्ष्य पुनः सोमं स्तुवंति शेषेण ऋग्द्वयेन जीवनार्थं पवस्वेति ॥ हेसोम त्वं वृषा अभि-
मतफलवर्षुकः देववीतये देवानां पाता प्रयतस्व यतस्त्वं इन्द्रस्य रामस्य हार्दि हृदयंगमं सोमधानं सोमो-

धीयतेऽनेनेति व्युत्पत्त्या सोमयागाधिकारे मुख्यं निमित्तं स्त्रीरूपं आ।विश प्रविश सोमेनाहं यक्ष्ये इति यथा सीता संकल्पयति यथा च सोमेन देवाः तृप्यंति तथा रावणवधेन सीताप्रोत्साहनेन च संपादयेत्यर्थः पुरा प्राक् नोऽस्माकं बाधात् अनेन पक्षिणा वधात् दुरिता दुरितानि दुर्मरणानि अति पारय संकटान्यतिक्रम्योत्तारय इत्युक्त्वा जटायुं स्तुवंति हि प्रसिद्धः तीक्ष्णदृष्टिर्जटायुनामा गृध्रः क्षेत्रवित् सीतास्थानवित् विपृच्छते सीतायाः गतिं विशेषेण पृच्छते रामाय दिशः दिशं संज्ञया आह उक्तवान् ॥ सः रामार्थं मृतोपि किंचिद्रामकार्यं कृतवान् । वयं तु व्यर्थमेव म्रियामहे इत्यर्थः ॥ ८४ ॥

**हितो न सप्तिरभिवाजमर्षेन्द्रस्येंदो जठरमापवस्व ॥ नावन सिन्धुमतिपर्षि विद्वाञ्छूरो न युध्यन्नव नो निदः स्पः ॥ ८५ ॥**

हितोनेति ॥ हेइंदो सोमाभिध श्रीविष्णो रामभद्र हितो हितकरो नेत्युपमार्थे यथा सप्तिरश्वः वाजं संग्रामं गच्छति तथा त्वं वाजंअर्ष अभ्यर्ष अभिमुखं गच्छ । ततो दारहरान् शत्रून्हत्वा दारैः संगतः सन् इंद्रस्य हविर्भोक्तुः स्वेनैव सोमरूपेण हविषा जठरं उदरं आपवस्व प्रविश । सोमयागान्कुर्वित्यर्थः नावा

मंत्र- नौकायानयथा सिन्धुंनदीं नाविका अतिपर्षि अतिपारयंत्येवं त्वं अस्मान् संकटानि अतिपर्षि अतिपार 
य । कीदृशो विद्वान् अस्माकं चित्तं जानन् शूरो न युध्यन् शूर इव शत्रून् प्रहरन् नोस्माकं निंदो
निंदकान् व्यर्थमेते वराकाः मृता इत्येवंवादिनो राक्षसान् अवस्पः अवाङ्मुखं जहि स्पृहिंसायां ।
॥ ४१ ॥ बहुलंछंदसीति श्नाप्रत्ययस्य लुक् तिपि गुणे हल्ङ्यादिना तिपोलोपः ॥ ८९ ॥

**आदक्षिणा सृज्यते शुष्म्या ३सदं वेति द्रुहो रक्षसः पाति जागृविः।**
**हरिरोपशं कृणुते नभस्पय उपस्तिरे चम्वो ३ र्ब्रह्मनिर्णिजे ॥ ८६ ॥**

तदेवं स्वामिभक्तान् वानरान् ज्ञात्वा संपातिरप्यनुजग्राहेत्याह ऋषभो वैश्वामित्रा
नवर्चेन सूक्तेन आदक्षिणेत्यादिना । शुष्मी बलवान् हरिर्वानरः आ दक्षिणा दक्षिणदिगभिमुखं आ
सृज्यते आज्ञाप्यते सीतान्वेषणार्थी त्वं दक्षिणस्यां दिशि लंकायां तस्या अन्वेषणं कुर्वित्याज्ञाप्यते
अर्थात् सूक्तांते दृष्टेन दिव्येन सुपर्णेनेति गम्यते एवमाज्ञप्तमात्रो हरिः आसदं आसीदंत्यस्मि- ॥ ४१ ॥
न्निति रामस्य गृहं सीतारूपं वेति प्राप्नोति । तत्प्राप्य जागृविः जागरूकः सन् द्रुहो द्रोग्धुः रक्षसो

रावणात् पाति आत्मानमिति शेषः स एव हरिः ओपशं सर्वस्य धारकं नभः अव्याकृतं मायामयं सीताख्यं पयः पयस्वत् प्रस्नवयुक्तं कृणुते करोति वत्सं गौरिव सीता तमवेक्ष्य स्निग्धा भवतीत्यर्थः कस्मै प्रयोजनाय चम्वोः वानरराक्षससेनयोः उपस्तिरे उक्तलक्षणाय तत्पूर्वकाय चम्वोः संग्रामाग्नौ होमायेत्यर्थः । होमस्यापि प्रयोजनं ब्रह्मनिर्णिजे ब्रह्मणः ब्रह्मांडस्य कंटकोद्धरणेन शोधनाय तेन कंटका एव मृताः वानरास्तु मृता अपि पुनरुत्थापिता इति ध्वनितं ॥ ८६ ॥ आसृष्टो हरिः कथं तां दिशं गतवानित्यत आह । प्रकृष्टिहेवेति । स आसृष्टो हरिः शूषः सीतायाः शोधकः

**प्रकृष्टिहेव शूष एति रोरुवदसूर्यं१वर्णन्निरिणीते अस्यतं॥ जहाति वव्रिं पितुरेति निष्कृतमुपप्रुतं कृणुते निर्णिजं तना॥ ८७ ॥**

कृष्टिहेव कृष्टयः कर्षकाः लोकानां पीडका राक्षसास्तान्हंतीति तथा तेषां काल इव क्रूरः प्रैति प्रकर्षेण गच्छति रोरुवत् गर्जन् अस्य कर्षणकर्तुः रक्षोगणस्य वर्णं मुखच्छायां असूर्यं अतिक्रूरं तं प्रसिद्धं निरिणीते निर्गमयति प्रगतमात्रो रावणादीन् दीनान् करोति किंच वव्रिं आवरणं अल्प-

कायस्वरूपं जहाति त्यजति महद्रूपं धारयतीत्यर्थः तथा पितुः वायोः निष्कृतं निश्चितं कृतं वेगवत्त्वं एति प्राप्नोति ततश्च उपप्रुतं सीतायाः समीपं गंतुं प्रुतं प्लवनं कृणुते करोति निर्णिजं विशुद्धं यथा स्यात्तथा उपप्रुतं कृणुते तना विस्तारेण महता रूपेण ॥ ८७ ॥ अद्रिभिरिति । स हरिः मध्येमार्गं



अद्रिभिः सुतः पवते गभस्त्योर्वृषायते नभसा
वेपते मती ॥ स मोदते नसते साधते गिराने
निक्ते अप्सु यजते परीमणि ॥ ८८ ॥

अद्रिभिः मैनाकपर्वतेन समुद्रमध्यादुद्गतेन सुतः प्रसुतो मयि विश्रमस्वेति आज्ञप्तः सन् तं गभस्त्योः बाहुभ्यां पवते गच्छति । हस्तस्पर्शमात्रेण तं संभावयति न तु तस्य पृष्ठे तिष्ठतीत्यर्थः । यतः वृषायते वृषवद्बलं स्वीयं प्रकाशयाति अत एव नभसा आकाशेन वेपते सर्वत्र गच्छति मती मेधावी पूर्वसवर्णः समती मत्या वा मोदते अनेनाहं मानित इति हृष्टो भवति । अतएव गिरा नसते वा- ङ्मात्रेण तत्र संश्लिष्टो भवति साधते स्वकार्यं च साधयति यतोयं अप्सु तीर्थरूपासु नेनिक्ते आत्मानं

शोधयति तथा परीमाणि परितो मीयते इति परिमा देहो यज्ञभूर्वा तत्र यजते आत्मानमंतर्यामिणं वा देवान्वा पूजयते । स्वसुकृतबलेनैव सर्वं साधयाति न त्वन्यबलेनेति भावः ॥ ८८ ॥ परीति ।

**परि द्युक्षं सहसः पर्वतावृधं मध्वः सिंचंति हर्म्यस्य सक्षणिं॥ आ यस्मिन् गावः सुहुताद ऊधनि मूर्द्धञ्छ्रीणंत्यग्रियं वरीमभिः ॥ ८९ ॥**

सहसो वेगात् परिद्युक्षं परितः कात्स्न्र्येन दिवं अंतरिक्षं क्षिणोत्यल्पीकरोति तं । कृत्स्नमप्यंतरिक्षं हरेर्वेगस्य न पर्याप्तमित्यर्थः । अत एव पर्वतावृधं पर्वतं वर्द्धयंतं मैनाकं पूर्वोक्तरीत्या मानयंतं तं मध्वो मदकराः देवाः परिसिंचंति पुष्पवृष्ट्यादिना । कीदृशं तं हर्म्यस्य शत्रुपुरस्य सक्षणिं अभिभावकं यस्मिन्हर्म्ये गावः सुहुतादः सुष्ठु हुतं दत्तमदंति ताः सम्यक्पालिताः ऊधनि ऊधः प्रभवे क्षीरे अग्रियं श्रेष्ठं सोमं मूर्धनि उच्चस्थाने प्रातव्ये निमित्ते सति वरीमभिः उरुतरैर्यज्ञादिभिर्हेतुभिः श्रीणंति मिश्रयंति यतोत्र सोमयागादयः प्रवर्तंते इत्यर्थः । तथाचोक्तं अग्निहोत्रं च वेदाश्च राक्षसानां गृहे गृहे इति ॥ ८९ ॥ हर्म्यस्य सक्षणिमित्येतद्विवृणोति । समीमिति ॥ इमित्यंत

मंत्र- लोप इत्यादिना मकारस्य लोपः प्रकरणात् स खेचरो हनुमान् अदितेः पृथिव्याः उपस्थे श्रेष्ठस्थाने रामायणं.
आजिगात् आगतः सिंधोः पारं प्राप्तस्तत्रापि गोः पृथिव्याः अपीच्यं अत्यंतरमणीयं अस्य रक्षसः
पदं स्थानं लंकाख्यं यत् मतुथाः मननीयगाथाः स्तोतव्याः शिल्पिनो विश्वकर्मादयः अ-
॥९१॥ जीजनन् तत् उपउपेत्य ज्रयति जरयाति शिथिलं करोति य ईं एतत्पदं रथं न रथ-
योजितमश्वमिव सं समेत्य अस्य भुरिजोर्बाह्वोर्दशस्वसारोऽ गुलयः अहेषत हेषणं कृतवत्यः

**समी रथं न भुरिजोरहेषत दश स्वसारो अदितेरुपस्थ आ॥**
**जिगादुपज्रयति गोरपीच्यं पदं यदस्य मतुथा अजीजनन् ॥ ९० ॥**
**श्येनो न योनिं सदनं धिया कृतं हिरण्ययमासदं देव एषति॥**
**एरिणंति बर्हिषि प्रियं गिराश्वो न देवाँ॥अप्येति यज्ञियः ॥ ९१ ॥**

यथाऽश्वोऽश्वमेत्य हेषते एवं अस्यांऽगुलयो लंकाधिष्ठात्रीं देवतामेत्य हेषंत उभयतश्चपेटिकाभ्यां तां
ताडितवानिति भावः ॥९०॥ श्येनोनेति ॥ यथा श्येनो योनिं कुलायं गगनमार्गेण एषति गच्छति ॥९१॥

एवं देवो महारुद्रः धिया कृतं ब्रह्म संकल्पनिर्मितं सदनं श्रीरामदाररूपं गृहं एषति । कीदृश गृहं हिरण्ययं आसदं हिरण्यं याति प्राप्नोति श्रीरामभद्रदत्तमभिज्ञानांगुलीयकप्रापकं हनुमंतं आ भिमुख्येन सीदत्युपविशतीत्यासदं यो यज्ञियोऽश्वो न अश्वइव देवान् प्रीणयन् अप्येति ई एनं प्रियं देवानां आप्ततमं बर्हिषि यज्ञे निमित्ते यज्ञादिमार्गप्रवृत्त्यर्थं गिरा हेतुभूतया किंचिद्वक्तुमित्यर्थः। एरिणंति अभिमुखं प्रेरयंति अभिज्ञानप्रदानेन विश्वस्तायां सीतायां हनुमान् वक्तुमारेभे इत्यर्थः ॥ ९१ ॥ वचनमेवाह ॥ परेति ॥ दिवी द्युलोकात् परा दूरे व्यक्तः अक्षयदत्तः । परो दिवो

**परा व्यक्तो अरुषो दिवः कविर्वृषा त्रिपृष्ठो अनविष्ट गा अभि ॥**
**सहस्रणीतिर्यतिः परायती रेभो न पूर्वीरुषसो विराजति ॥ ९२ ॥**

ज्योतिर्दीप्यते इति श्रुतेः । अरुषः शांतः शुद्धेन रूपेण कविः क्रांतदर्शी सर्वज्ञो मायाविरूपेण वृषा गृहस्थधर्मरूपः त्रिपृष्ठः त्रयो धर्मार्थकामाः यज्ञराज्यरतिरूपाः दारहरणात् पृष्ठे यस्य स

मंत्र- त्रिपृष्ठः गाः अभि भूप्रदेशान् अभिव्याप्य अनविष्ट शब्दमकरोत् त्वच्छोकेन सर्वाः दिशः शून्याः प 
श्यन् हाहाशब्दं करोतीत्यर्थः ॥ एतेन मधुमानूद्रप्सः परिवारमर्षतीति सीतया पृष्टं यत् रामो मयि
प्रीतिमानस्तीति तस्येदमुत्तरम् ॥ यत्पृष्टं रावणं सपरिवारं दग्धुमेष्यति तस्योत्तरमाह ॥
॥९२॥ सहस्रेति ॥ सइदानीं यतिः त्वत्प्राप्त्यर्थं यतमानः सहस्रणीतिः सहस्राणि अनंतानि शूराणां
नयतीति तथा परायतिः शत्रून् पराकर्त्तुं यतमानः रेभो न शब्दं कुर्वाणो महोक्ष इव पूर्वीरुषस आरभ्य अ-
स्माकं त्वद्वियोगकालमारभ्य संप्रति विराजते दीप्यते बह्वीं सेनामादाय शत्रूनुन्मूलयितुं क्षमते इ
त्यर्थः॥९२॥त्वेषमिति॥अस्य रामरूपस्य सोमस्य वर्णःक्षात्रियःतेन तत्स्वभावः शौर्यं तेजो धृतिर्दा-

**त्वेषं रूपं कृणुते वर्णो अस्य स यत्राशयत्समृता सेधति स्रिधः॥ अप्सा याति स्वधया दैव्यं जनं सं सुष्टुती नसते संगोऽअग्रया ॥ ९३ ॥**

क्ष्यमित्यादिः त्वेषं दीप्तं रूपमात्मनः कृणुते कुरुते सः यत्र यस्यां समृता समितौ संग्रामे स्रिधः 
शोधकान् शत्रून् सेधति निषेधति तत्र तान् अशयत् शयनमकारयत् अस्मात् कश्चिदपि शत्रुर्जीवन्न

मुच्यते इत्यर्थः ॥ तेनाऽवश्यमसौ रावणं सपरिवारं मारयिष्यत्येवेत्युक्तम् । स्वधया पितृकार्येण निमित्तेन दैव्यंजनं देवताकार्यनिमित्तं च अप्साः अपां सानिता विभाजकःसन् याति अनुसरति सर्वं दैवपितृकार्यमद्भिरेव कुर्वन् स्वयमपि त्वच्छाभार्थमब्भक्षव्रतोऽस्तीत्यर्थः ॥ तथा सुष्टुती शोभनया स्तुत्या संनसते देवैः पितृभिश्च सह संगतो भवति स्तुतिमात्रेण तेषामातिथ्यं करोतीत्यर्थः ॥ कीदृश्या सुष्टुत्या संगो अग्रयेति समीचीना गौर्वाणी सुरसंस्कारादिमती अग्रे पुरोवर्तिनी प्रधानभूता यस्यां सा तयेत्यर्थः ॥ सुरसशब्दगुंफितया स्तुत्येत्यर्थः ॥ ९३ ॥ केन त्वं दक्षिणां दिशं प्रति

**उक्षेव यूथा परियन्नरावीदधि त्विषीरधित सूर्यस्य ॥**
**दिव्यःसुपर्णोवचक्षत क्षां सोमः परि क्रतुना पश्यते जाः ॥ ९४ ॥**

गुतुं विसृष्ट इति प्रष्टुमिच्छंतीं सीतां आलक्ष्य स्वयमेवाह ॥ उक्षेवेति ॥ यथा उक्षा रेतःसेचनकामः यूथा गोयूथानि परियन् परिक्रामन् एति एवं दिव्यः सुपर्णः संपातिनामा पक्षी वानरयूथानि परिक्रामन् वचनामृतसेचनकामोऽरावीत् इमं शब्दं कृतवान् कोऽसौ यःसूर्यस्य त्विषीः

मंत्र- दीप्तीः अधि अधिकं अधित धृतवान् संपातिजटायू पक्षिणौ अरुणपुत्रौ सूर्यं स्प्रष्टुं प्रस्थितौ तयोः रामायणं.
सूर्यदीप्त्या दह्यमानयोर्मध्ये संपातिःस्वपक्षाभ्यां जटायुमाच्छादयत् अधिको दग्धोऽभूदित्युपाख्याने।
॥९३॥ यः सुपर्णः क्षां पृथ्वीं कृत्स्नां अवचक्षत उपरिभूत्वाऽधःपश्यति स एव क्रतुना उपासनया सोमः
सोमभावं गतः सच तस्य जाः जायां सीतां परिपश्यते दिव्यदृष्ट्या त्वां दृष्ट्वाऽमुष्मिन् स्थले सीता
ऽस्तीत्यस्मान् प्रयुक्तवानित्यर्थः ॥ एतेन यदुक्तं नेंद्रादृतेपवतेधामकिंचनेति तस्याऽयमुपसंहारः॥ सोमः
परिक्रतुनापश्यतेजा इति ॥ ९४ ॥ एवं रामानुग्रहमात्मानि श्रुत्वा सीता हनुमंतं स्वस्य दुःखमि

**अवीरामिव मामयं शरारुरभि मन्यते ॥**
**उताऽहमस्मि वीरिणींद्रपत्नी मरुत्सखा विश्वस्मादिंद्र उत्तरः॥ ९५॥**

त्थंच निवेदयति ॥ अवीरामिवेतिद्वाभ्यां ॥ अयं शरारुर्मुमूर्षुः रावणः मांअवीरामिव
वीररहितामिव अभिमन्यते हिनस्ति राक्षसीद्वारा तर्जयति उत परंतु अहं वीरिणी वीरवती अस्मि ॥९३॥
इंद्रपत्नी परमेश्वरस्य सहचारिणी मरुद्वायुस्तत्पुत्रः त्वंच सखा यस्याः सा मरुत्सखाऽस्मि

विश्वस्मात् त्रैलोक्यादिंद्र उत्तरः उत्कृष्टतरः अत एवं वीरवतीं मां धर्षयन् अयं मरिष्यत्येवेत्य र्थः ॥ ९५ ॥ संहोत्रमिति होत्रं अग्निहोत्रादिकं समनं यान्येव संग्रामनामानि तानि यज्ञनामानी त्युक्तेर्यज्ञं वा या नारी पुरा अवगच्छति सा ऋतस्य कर्मणो यज्ञादेः वेधाः स्रष्टा वीरिणी वीरयुक्ता

संहोत्रं स्म पुरा नारी समनं वाव गच्छति॥ वेधा ऋतस्य
वीरिणींद्रपत्नी महीयते विश्वस्मादिंद्र उत्तरः ॥ ९६ ॥
इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा संविशस्व ॥
संवेशने तन्व १ श्चारुरेधि प्रियो देवानां परमे जनित्रे॥ ९७॥

च भूत्वा इंद्रपत्नी यथा महीयते होत्रादिना तथा पुनरिंद्रः करोत्विति शेषः ॥ पक्षे यज्ञविवेकाभ्यां आग्निजटायुभ्यां संरक्षितां श्रद्धां मां बोध रामएव नेतुं समर्थ इति भावः॥ मरुत्प्राणः सूत्रात्मा॥ ९६ ॥ एवं सीतयोक्तो हनूमान् सीतामाह ॥ इदमिति ॥ भोःसीते त्वं द्विदलस्य दांपत्यस्य इदं तद्रूपमेकं दलं पर ऊं तारकं पुरस्ताच्च समुद्रस्य पारे तवैकं दलं रामरूपमस्ति अतस्तृतीयेन मया ज्योतिषा

॥९४॥ प्रभवता सहायेन संविशश्व मिथुनमिव अहं त्वां प्रापयिष्यामीत्यर्थः ॥ संवेशने संयोगे तन्वः शरीरार्धस्य चारुः शोभनो देवानां प्रियो यज्ञार्हस्ते भर्ताऽस्ति त्वं च जनित्रे प्रजोत्पत्त्यै स्वगृहे एधि स्थिरा भव ॥ पक्षे निष्कामभक्तिरेव श्रद्धां बोधोन्मुखीकर्तुमर्हेति भावः ॥ ९७ ॥ एवमुक्ता सीता हनुमंतमाह ॥ तनूष्टइति ॥ हे वाजिन् वेगवन् वानर ते

तनूष्टे वाजिन् तन्वं १ नयंती वाममस्मभ्यं धातुशर्म तुभ्यं ॥
अह्रुतो महो धरुणाय देवान् दिवीवज्योतिः स्वमामिमीयाः ॥ ९८ ॥

तव तनूः अंगानि प्रतितन्वं स्वशरीरं नयंती प्रापयती चेत् स्यां तर्हि तुभ्यं धातुवच्छरीरेण स्वशरीरं संधानं अस्मभ्यं शीघ्रं रामदर्शनकारित्वेन शर्मप्रदमपि वामं कुटिलं राजभार्यापि परपुरुषस्पर्शंप्राप्तवतीत्यकीर्तिकरमित्यर्थः ॥ रावणस्पर्शस्त्वनिच्छंत्या जात इति न तत्र मम दोष ॥९४॥
इति भावः ॥ अतोऽह्रुतःपरैरनभिभूतः महो महान् रामः देवान् देवकार्यं कृत्वा मां परीत्य स्वीकरोत्वित्यर्थः ॥ नियाः आमी इतिमध्यमो व्यत्ययेन वा ॥ ९८ ॥

एवंचे त्किंचि द्विश्वासकर माभिज्ञानं रामाय ब्रूहीत्युक्त्वा सीता हनूमंतमाह ॥ दूरेतदिति॥ तद्बुद्धिस्थं गुह्यं दूरे बहुकालिकं पराचै र्दूरदेशीयं नाम निश्चितं बुद्ध्यस्वेति शेषः॥ यत् यन्निमित्तं भीते द्यावापृथिव्यौ त्वा त्वां वयोधै वयसो मम पीडाकरस्य पक्षिणो विग्रहस्तस्मै तदर्थ अव्हयेतां एनां काकेभ्यस्त्राहीत्या- हूतवत्यौ तदा पृथिवीं द्यांच उदस्तभ्राः स्तब्धीकृतवानसि अभिके कामुके पक्षिणि निमित्तभूते सति हे

**दूरे तन्नाम गुह्यं पराचैर्यत्त्वा भीते अव्हयेतां वयोधै ॥ उदस्त भ्राःपृथिवीं द्यामभीके भ्रातुःपुत्रान् मघवन् तित्विषाणः॥ ९९ ॥**

मघवन् लक्ष्मीपते भ्रातुःपुत्रान् विष्णोस्तव भ्राता इंद्रःतत्पुत्रान् काकरूपान् बहुत्वमार्षं तित्विषाणःइषीक- या दीपयन् त्वदस्त्रदीपितं काकं कृत्स्ने द्यावापृथिव्यावपि त्रातुं न शक्ते अभूतामित्यर्थः॥ काकतुल्यं रावणं हत्वा मां नयेति भावः ॥ पक्षे कर्मैव श्रेयो न बोध इति विपर्ययो बोधभ्राता तज्जःसंशयः काकः बोधप्रियां श्रद्धां कदर्थयन् बोधेन त्रैलोक्यादपनीत इतिभावः॥ मघवन् लक्ष्मीपते विद्यापते ॥९९॥

॥ देवासआयन्निति ॥ देवास आयन्नित्येकस्मिन् बहुवचनं बहुत्वभ्रामात् देवाःआयन् आगताःपर

 एवं सीतासंदेशं प्राप्य प्रस्थातुं हनुमान् शत्रुसंपदं बबाधे तदावेदयंति राक्षसा रावणं प्रति ॥ 

शून् अस्मदीयानेव अबिभ्रन् धृतवंतः विड्भिर्जनसंतानरूपाभिः प्रजाभिः सह वाना वनानि वृश्चन्तः छिंदंतः

अभ्यायन् सुद्रु सुष्टुद्रवतीति तंशीघ्रगं अग्निं सेतुनिबद्धं तडागजलं वा वक्षणासु गृहैकदेशविशेषेषुसे

॥९९॥ देवास आयन् परशूँरबिभ्रन्वाना वृश्चंतो अभि विड्भिरायन् ॥

निसुद्र्वाँ दधतो वक्षणा सुयत्रा कृपीटमनुतद्दहंति ॥ १०० ॥

शशः क्षुरं प्रत्यंचं जगाराद्रिं लोगेन व्यभेदमारात् ॥ बृहंतं

चिद्दहते रंधयानिवयद्वत्सो वृषभं शूशुवानः ॥ १०१ ॥

तुभंगेन नदीषु वा निदधतः संतः यत्र कृपीटं वाप्यादौ जलमस्ति तदपि अनुदहंति काष्ठादिकं दहं-

तस्तदूष्मणा वाप्यादीन्यपि शोषयंतीति भावः॥ कृपीटमग्नियोनिः काष्ठादिकं वा कृपीटजत्वात् तदनु

अन्यदपि वज्रपाषाणादिकं दहंतीत्यर्थः ॥ पक्षे कामस्य नगरं विषयाः भोग आरामः तज्जो हर्षः पु- ॥९९॥

त्रः ताम् विष्णुभक्तिं शमदमवैराग्यगर्भितत्वादनेकरूपाम् उच्छिनत्तीत्यर्थः ॥ १०० ॥ एवंश्रुत्वा

रावणः शोचति ॥ शशः क्षुरमिति ॥ यथा शशः पशुः क्षुरं तीक्ष्णधारं लोहं प्रत्यंचं अभिमुखधारं जगार निगीर्यमाणः अंतः कृंतन्नेव प्रविशति एवं सीतां स्ववधार्थमानीतवानित्यर्थः॥ अद्रिं शैलं लोगेन लाति आदत्ते उद्गिरतीति लोगोलोष्टस्तेन आराद्दूरात् आगत्य व्यभेदं भेदितवानस्मि बृहंतं महांतं आत्मानं चित् निश्चितं ऋहते क्षुद्राय सुखाय रंधयानि पीडयानि यथा वयत् गच्छन् वत्सः वृषभं महोक्षं शूशुवानः वर्धमानः आधिक्यं दर्शयन् ॥ १०१ ॥

**सुपर्णइत्था नखमासिषायाऽवरुद्धः परिपदं नसिंहः ॥**
**निरुद्धश्चिन्महिषस्तर्ष्यावान् गोधा तस्मा अयथं कर्षदेतत् ॥ १०२॥**

एवंश्रुत्वा विचिंत्यापि रावणो हनूमंतं बबंधेत्याह ॥ सुपर्णइति ॥ सुपर्णः पक्षिवत्खेचरो रावणः इत्था एवं व्यालग्राहिवत् नखं न खिद्यते छेदनभेदनादिनेति नखं हनुमंतं आसिषाय ब्रह्मपाशैराबबंध सचावरुद्धो बद्धोऽपि परिपदं नसिंहः सिंह इव स्वतंत्रः परितोगच्छत्येव तथा तर्ष्यावान् तृषाक्रांतो जलाशयाभिमुखो महिषो महानारण्यकः चित् इव निरुद्धोऽपि

 रोधकान् कर्षत् एवमेतत् तस्मै हनुमते अयथं असदृशं गोधा परिवेष्टनं पाशैर्बंधनं गुधपरिवेष्टने 
पचाद्याचि टाप् दुर्बलैर्निरुद्धस्तानेव कर्षन् यथेष्टं संचरतीति भावः ॥ १०२॥ स एवं ब्रह्मपाशैर्बद्धोपि तान् यदा न गणयति तदैनं देवाः प्रार्थयंते ब्रह्मपाशानामपमानो माभूदित्येतदर्थं ॥ अक्षानह इति ॥



**अक्षानहो नह्यत नोत सोम्या इष्कृणुध्वं रशना ओतपिंशत ॥**
**अष्टाबंधुरं वहताभितो रथं येन देवासो अनयन्नभि सप्रियम् ॥१०३॥**

भोः सौम्याः विष्णुभक्ताः अक्षानहः अक्षं रावणपुत्रं मृत्युपाशैर्बध्नंतो यूयं नह्यत न आत्मानमपिबध्नीत रशनाः ब्रह्मपाशान् इष्कृणुध्वं स्वीकुरुध्वं आउत पश्चात् पिंशत विभजत स्वीकृत्य खंडयत अष्टाबंधुरं जानुद्वयकूर्परद्वयस्कंधद्वयजंघाद्वयेषु बंधनवंतं रथं देहं अभितो नगरे वहत प्रापयत येनदेवासो देवाःअभिप्रियं स्वेष्टं अनयन् प्राप्नुवन् पुरेसंचरता कृत्स्नेऽस्मिन् दग्धे देवाःसुखं प्राप्स्यंतीत्यर्थः॥ पक्षे अक्षानहः इंद्रियजयिनःअभितःकर्मोपासनामार्गयोःविधिनिषेधपाशानंगीकृत्य विषयान् 

भोगांश्चोत्साद्य लब्धपरोक्षबोधाःअशनादीनि प्राणादिषु प्रक्षिप्य आत्मानमसंगं भावयतेत्यर्थः॥ १०३॥ एवं बद्धस्य हनुमतःपुच्छे लापितमग्निं सीता प्रार्थयते ॥ रक्षोहणमिति ॥ रक्षोहणं रक्षसां अक्षादीनां हंतारं वाजिनं हरिं वानरं दृष्ट्वा आजिघर्मि क्षरामि शोकेनाऽश्रूणि निवर्त्तयामीत्यर्थः ॥ अतो मित्रं हनुमत्पितुर्वायोः सखायं प्रथिष्ठं प्रथमानं अग्निं शर्म हनूमते

रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामिशर्म शिशानो ॥
अग्निः क्रतुभिः समिद्धः सनो दिवा सरिषः पातु नक्तम् १०४॥

कल्याणं उपयामि उपेत्य याचामि । तत्त्वायामीतिवत् वर्णलोपश्छांदसः। शिशानोदीप्यमानोऽग्निः क्रतुभिः यज्ञैः पूर्वं अस्माभिः समिद्धः संदीपितः सइदाना नोऽस्मत्संबंधिनं जनं दिवा नक्तं च सरिषः हिंसातः पातु ॥ पक्षेऽग्निर्विज्ञानं तद्युता भक्तिः कृत्स्नां कामसंपदं ना-

शितवतीत्यर्थः ॥ १०४ ॥ अयोदंष्ट्रइति ॥ अयोदंष्ट्रः अर्चिषा ज्वालया यातुधानान् राक्षसान् उपस्पृश हेजातवेदः समिद्धः सन् जिव्हया महाज्वालया मूरदेवान् मूलदेवान् पूर्वदेवान् असुरान् इति यावत् । आरभस्व स्पृश क्रव्यादो मांसादांश्च तान् वृक्ती एकीकृत्य च आसन् आस्ये

**अयोदंष्ट्रो अर्चिषा यातुधानानुपस्पृश जातवेदः समिद्धः॥**
**आजिव्हया मूरदेवान् रभस्व क्रव्यादावृक्त्यपिधत्स्वासन् १०५**
**यत्रेदानीं पश्यसि जातवेदस्तिष्ठंतमग्नउत वा चरंतं ॥**
**यद्वांतरिक्षे पथिभिःपतंतं तमस्ता विध्य शर्वा शिशानः ॥ १०६॥**

ऽपिधत्स्व तिरोहितान् कुरु ॥ पक्षे अयोदंष्ट्रोऽ भेद्यार्थभेदनक्षमः अर्चिषा सात्विकवृत्त्या यातुधानान् क्रोधादीन् निगृण्हीष्व जातवेदः हेअग्ने अतीतानेकजन्मादिदुःखज्ञ शेषं स्पष्टम् ॥ १०५ ॥ यत्रेति॥ तं रावणं कामं वा विध्य भिंधि दूरीकुरु वा शर्वा सर्वाणिहिंस्राणिरक्षांसि शिशानःदीपयन्तयोरुभयोरपि अस्ता अस्तानि गृहाणि दृषत्काष्ठादिमयानि कामाविषयभूतानि स्रगादीनि वा शेषं स्पष्टम्॥

॥ १०६ ॥ परीति ॥ हे अग्ने त्वा त्वां विप्रं व्यापकम् हे सहस्य तेजस्विन् पुरंपरि अरिनगरस्य परितः धीमहि स्थापयामः कृत्स्नं नगरमावेष्टय यथा बहिर्निःसर्तुमन्यो न शक्नोति तथा स्थिरो भवेत्यर्थः ॥ धृषत् अन्यं धर्षयन् वर्णो यस्य तं त्वां धृषद्वर्णं दिवेदिवे नित्यं भंगुरं विनाशि शीलं मायामयं अहंकारादि तद्वत् तां भंगुरावतां हंतारं निधीमहि ॥ पक्षे सर्वशरीरस्थं पाप्मानं भस्मीकुरु यथा

परि त्वाऽग्ने पुरंवयं विप्रं सहस्य धीमहि ॥
धृषद्वर्णं दिवेदिवे हंतारं भंगुरावताम् ॥ १०७ ॥
हरिं मृजंत्यरुषो न युज्यते सं धेनुभिः कलशे सोमो अज्यते ॥
उद्वाचमीरयति हिन्वते मती पुरुष्टुतस्य कतिचित्परिप्रियः ॥ १०८ ॥

बहिर्वासनाः न निःसरेयुस्तथेति भावः ॥ १०७ ॥ एवं लंकां दग्ध्वा वानरैः सह हनुमान् रामं प्रत्यागत इत्याह ॥ हरिंमृजंतीति ॥ हरिं वानरं हनुमंतं कृतकार्यं मृजंति प्रेम्णा हस्तेन परिमार्जयंति के अरुषः रोषरहिताः शांताः श्रीरामभद्राःबहुत्वं पूजायां एतेनान्वेषणात्प्राक्कृतकोपाः स्थिता इति गम्यते नशब्दउपमार्थे उत्तरान्वयी यथा धेनुभिर्धेनुप्रभवैः पयोभिः कलशे द्रोणकलशे

मंत्र- सोमः समज्यते संगतो भवत्यतिशयाधानाय एवं यो हरिर्युज्यते अर्थात्स्वा
मिनेति लभ्यते । सच हरिः वाचं उदीरयति हिन्वते वर्धयते च स्वामिनं यतो मती मे-
धावी सुपः पूर्वसवर्णः तामेव वर्धनरूपां वाचमाह पुरुष्टुतस्य कतिचित्परिप्रिय इति बहुभि. ब्रह्माद्यैः

स्तुतस्य तव मदीयाः परिप्रियः परितः प्रीणयंति ताः स्तुतिवाचः कतिचित् कियत्यः यावती स्तु
तिर्मया कर्तव्या सा सर्वथाप्यत्यल्पैवेति भावः ॥ १०८ ॥ साकमिति ॥अतः परं बहवो मनीषिणो

**साकं वदंति बहवो मनीषिण इंद्रस्य सोमं जठरे यदादुहुः ॥**
**यदीं मृजंति सुगभस्तयो नरः सनीळाभिर्दशभिः काम्यं मधु ॥१०९॥**

धीमंतो वानराः साकं युगपत् श्रीरामभद्रं प्रवदंति यत् यतः कारणात् ते सर्वे इंद्रस्य जठरे जठर
तृप्त्यर्थं सोमं पयोभिर्मिश्रयितुं आदुहुः दुग्धवत्यो धेन्वाः कृतसोमयागात्तेषांरामपर्यंतं गतिरासी
॥९८॥
दित्यर्थः ॥ कुत एवं रामस्य दौर्लभ्यं अत आह॥ यदिति ॥ यत् यतः ई एनं रामं काम्यं काम
नीयं मधु अमृतं नरो मनुष्याः सुगभस्तयः प्रज्ञानांशवो विशुद्धचेतस्त्वाद्येषां ते तथाभूताः दशभिः

सनीळाभिः समाननीडाभिः पंचभिः प्राणवृत्तिभिः पंचभिर्धीवृत्तिभिश्च सर्वैः कर्मभिः सर्वैर्ज्ञानैश्च मृजंति मृगयंति तस्माद्रामेण सह संवादो महतः पुण्यस्य फलमिति ज्ञेयं ॥ १०९॥ संवादमेवाह तिसृभिः ॥ अरममाण इति ॥ इंद्र ते ऋत्वियः सोम इति पदचतुष्टयमुत्तरमंत्रादपकृष्यते हे इंद्र श्रीराम ते तव सोमः सोमाभिषवनिमित्तभूता ऋत्वियः ऋतौ ईयते गम्यत इति ऋत्वियः ऋतुशब्दकादिणोतेः

**अरममाणोऽत्येति गाअभि सूर्यस्य प्रियं दुहितुस्तिरो रवं ॥**

**अन्वस्मै जोषमभरद्विनंगृसः सं द्वयीभिः स्वसृभिःक्षेतिजामिभिः ११०**

कः इयङ् ऋतुकालैकगम्या जायेत्यर्थः ॥ स सोमस्त्वद्वियोगातुरः सूर्यस्य दुहितुः पतिव्रतात्वेनातिप्रसिद्धायाः सावित्र्याः प्रियं रवं कीर्तिशब्दं तिरः तिरस्कृत्यगाः भूप्रदेशान् अभितो व्याप्यअत्येति अतिक्रम्य गच्छति लोकान्तराणीतिशेषः॥ एवं तस्याः पातिव्रत्यमुक्त्वा दुःखमाह ॥ अन्विति॥ अस्मै एनंउक्तविधं त्वदीयं सोमं प्राप्तुं विनं कमनीयं वस्तुजातं समर्पयितुं गृण्हातीति विनंगृसो रावणःजोषं पर्याप्तं यथास्यात्तथा अन्वभरत् अनुहरति सर्वं कमनीयायै प्रयच्छति अथापि सा संक्षेति आतिशयेन

क्षीयत एव जामिभिः सहचरीभिः स्वसृभिः एकयोनिभिः द्वयीभिरुभयीभिःचेतोवृत्तिभिः हेतुभूताभिः संक्षेति इष्टवियोगजैःशोकादिभिरनिष्टसंयोगजैर्भयादिभिश्चातिक्षीणास्तीत्यर्थः॥ १००॥ नृधूतइति। नृभिः राक्षसीभिर्धूतोऽवधूतःभीषितःअद्रिसुतःअद्रयःपाषाणाःसुताआज्ञप्ताःयस्मै पाषाणैरियं चूर्णीकर्तव्येति



नृधूतो अद्रिषुतो बर्हिषि प्रियः पतिर्गवां प्रदिव इंदुर्ऋत्वियः ॥
पुरंधिवान् मनुषो यज्ञसाधनः शुचिर्धियापवते सोम इंद्र ते ॥१११॥
नृबाहुभ्यां चोदितो धारया सुतोऽनुष्वधं पवते सोमइंद्रते।
आप्राःक्रतून् समजैरध्वरे मतीर्वेर्नद्रुषच्चम्वोश्ररासदद्धरिः॥ ११२॥

एवं भीषितोपि बर्हिषि तृणे निषण्णा इतिशेषः ॥ प्रियस्तव गवां पतिर्जितेंद्रियःप्रदिवःपुराणःइंदुःई-श्वरःस्वसंरक्षणे प्रभुःऋत्वियःव्याख्यातःपुरंधिवान् बहुधीयुक्तःमनुषो मनुष्यरूपस्तव यज्ञसाधनःस-हधर्मचारी धिया शुचिःपवते आत्मानं पुनाति ॥ १११ ॥ नृबाहुभ्यामिति ॥ हे इंद्र ते तव सो-मःसोमयागसाधनं सीताख्यःबाणरूपेण परीतःसन् बाहुभ्यां नररूपस्य तव बाहुभ्यां भुजाभ्यां चो

दितः प्रेरितः सन् अनुष्वधं स्वधा अन्नं तेन तद्विकारो देह उच्यते प्रतिशरीरं पवते गच्छति शीघ्रमवत्यथः॥ वर्तमानसामीप्ये वर्तमानवन्निर्देशात्। कीदृशः धारया अविच्छिन्नप्रवाहेण सुतः निसृष्टः त्वं चक्रतून् संकल्पान् स्वस्य सीताया अस्मदीयांश्च आ अतिशयेन आप्राः पूरितवानसि कार्यसिद्ध्यश्यंवभावको भूतप्रयोगोऽगन्मसुवःसुवरगन्मेतिवत् तथा अध्वरे युद्धयज्ञे चम्वोः वानरराक्षससेनयोः मतीः बुद्धीः बुद्धिधर्मान् शौर्यादीन् समजैः सम्यक् जितवानसि ॥ अस्मिन्निरपेक्षएव शत्रून् निहंतुं समर्थोऽसीत्यर्थः यतस्त्वेति भावः ॥ कथं युष्माभिः सीता दृष्टेत्याशंकायां हनूमंतं निर्दिश्य वदंति वेर्नद्रुषत्पक्षीव वृक्षारू-

**अंशुं दुहंति स्तनयंतमक्षितं कविं कवयोऽपसो मनीषिणः॥**
**समींगावो मतयो यंति संयत ऋतस्य योना सदने पुनर्भुव॥ ११३॥**

ढो हरिर्हनुमान् आसदत् प्राप्तवान् त्वदीयं सोमसाधनमित्यनुषंगः समुद्रव्यवहिते पक्षिवरप्राप्ये देशे सीताहनुमता समुद्रंलंघयता दृष्टेत्यर्थः॥ ११२ ॥ ततः किंवृत्तमतआह॥ अंशुंदुहंतीति॥ अंशुं अंशुमंतं सूर्यं वायुमग्निं वा त्रयः केशिन इत्यग्निर्वायुः सूर्यश्च केशिन इतिस्मृतेः तस्मात् अ रसः कर्माणि दुहंति यथागोः सारभूतं पयो दुह्यते एवं अग्नेः सारः परदाहकत्वं सूर्यस्य सर्वविषयप्रकाशकत्वं वायोः शीघ्रगा-

मित्वं बलवत्त्वंच मनीषिणो मनोनिग्रहसमर्थाः मतयो मेधाविनः वानराः दुहंति आददत इत्यर्थः॥ कीदृशं अंशुं स्तनयंतं गर्जंतं प्रख्यातमित्यर्थः॥ अक्षितमक्षीणं बलेन वेगेन चेत्यर्थः॥ कविंक्रांतदर्शिनं एतानिक्रमेमणाग्निवायुसूर्याणां योग्यतया विशेषणानीति ज्ञेयं । गर्जंतोऽक्षीणबलवेगाः गगनमार्गेण गच्छंतीत्यर्थः॥ गत्वाच किं कृतवंतस्तदाह॥ समिति॥ संयतः समेतीति संयन् संहतमचंचलं तस्य ऋतस्य सलिलस्य योना योनौ। सुपो डादेशः। आकरे समुद्रे आधारे सदने निषदने निमित्ते पुनर्भुवोगावः पूर्वं धातुः सकाशात् जाताः पश्चाच्चतुष्कोणत्वाद्याकारेण शिल्पिभ्योनलादिभ्यो भूताः गावो भूमयः सुघटिताशिलारूपाः ई लोकप्रसिद्धवत् संयंति एकीभावेन मिलंति यथा पट्टांगणेष्वविवृतसंधयः शिला निविशंते एवं स्तब्धोदके सिंधावपीति तथांशुं दुहंतीति संबंधः ॥ ११३ ॥ नाभेति ॥ दिवो द्युलोकादपि महः महति अपामूर्मौ सलिलानां संघे द्यौः समुद्रसमंतर इति द्युसमुद्रयोः साम्यदर्शनात् तादृशे समुद्रे अंतः मध्ये समुद्रस्य मध्ये इत्यर्थः॥ पृथिव्याः नाभा । सुपो डादेश । नाभिः नाभावुत्पन्नः पर्वतइति या-

**नाभा पृथिव्या धरुणो महोदिवो३ऽपामूर्मौसिंधुष्वंतरुक्षितः॥**
**इंद्रस्य वज्रो वृषभो विभूवसुः सोमो हृदे पवते चारु मत्सरः॥११४॥**

वत् सधरुणो धारकोऽभूत् समुद्रे नौकावत्पर्वतसमुदायोऽपि वानराणां धारणार्थं सेतुरूपेण स्थित इत्यर्थः ॥ कीदृशो नाभा सिंधुषु नदीषु निमित्तभूतासु उक्षितः सिक्तः शिरसि प्रवर्तमानाभिर्नदीभिः आर्द्रीकृतः अतिशयेनमहानित्यर्थः ॥ एतेन दशयोजनविस्तीर्णे शतयोजनमायते सेतौ तत्तत्पर्वत शिरोगतानद्योपिबह्व्यः संतीत्युक्तं कथं सलिले शिलानां तरणमतआह॥ इंद्रस्येति॥ इंद्रस्य परमेश्वरस्य

**जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्वस्वित् ॥**
**ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुपनक्तमेति॥ ११९ ॥**

रामस्य वज्रः वज्रवदप्रातिहतगतिः वृषभो धर्मः विभूनि व्यापकानि वसूनि फलानि यस्य स विभूवसुः। दैर्घ्यं सांहितिकं । सोमः सोमयागादिजन्मा हृदे जनानां हृदयशोधनाय पवते गच्छति कीदृशः सोमः मत्सरः देवानां मदकरः हर्षद इति यावत् । यथाऽऽग्नेये दिव्ये धर्मबलादाग्निः स्वीयं दाहकत्वं त्यक्त्वा शीतत्वं भजति एवमिहापि रामधर्मबलाद्विशुद्धहृदयो महोदधिरपि स्वीयं मज्जकत्वं क्लेदकरत्वं च त्यक्त्वा घनत्वं गतःतेन तत्र पाषाणास्तरंतीति भावः ॥ ११४॥ ततः परं द्वाभ्यां मंत्राभ्य सोममेव स्तुत्वाऽग्रिमसूक्तस्य स्रक्वेद्रप्सस्येत्यादेराद्येन चतुर्ऋचेन पुनः सेतुबंधनमेव स्तुतं तदप्यृां-

 

कूचतुष्टयमग्रेऽन्याख्यास्यते । ततःपरमृक्पंचकंशेषभूतं तूपोद्घातएव व्याख्यातं तदेवं सेतुबंधांतां कथां
समाप्य हनुमति समुद्रमुल्लंघ्याऽऽगते लंकायां किं वृत्तमित्याशंकायां पुत्रबंधनगरदाहादिना तत्तयो
र्मंदोदरीरावणयोः शोकमाह ॥ जायेति ॥ कितवस्य धूर्तस्य कपटसंन्यासिनः सीताहर्तुः रावणस्य
॥६१॥ जाया मंदोदरी तप्यते यतः हीना पुत्रेणैव क्वस्विच्चरतः परलोकं कर्मानुरूपं गच्छतो माता हतपु-

**न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत्॥**
**अक्षस्याऽहमेकपरस्य हेतोरनुव्रतामप जायामरोधन् ॥ ११६ ॥**

त्रेत्यर्थः ॥ कितवोऽपि ऋणावा ऋणशब्दो दुर्गभूमौ लंकाख्यदुर्गवान् समुद्रजलाश्रयवानपि हनुम-
त्प्रतापं दृष्ट्वा बिभ्यत् भयं कुर्वन् रावणः अन्येषां राघवाणां अस्तं गृहं सीतां धनं राज्यं च इच्छ
मानः इच्छन् उपनक्तं प्रदोषकाले एति सीतास्थानं रत्यर्थी सन् गच्छाति ॥ पक्षे हर्षनाशेन
सुखस्वादरूपायां मातर्युपतप्तायां कामरावणो मधुमत्याख्यां योगभूमिं अयोगिभिर्दुर्गमां लंकारू
पामाश्रितोऽपि भक्तेभ्यो बिभ्यत् रजोगुणस्योदयकाले पुनःश्रद्धां वशीकर्तुं कामयतइति भावः ॥ ॥६१॥
॥ ११६ ॥ सः रावणः पुनः सीतया योवः सेनानीरिति प्रत्याख्यातः उभयभ्रष्टः पुत्रं भार्यां चाऽ

नुशोचति ॥ नमेति ॥ एषा भार्या मा मां न मिमेथ न हिंसितवती न जिहीळे न मम हेळनं कृतवती तथा सखिभ्यो मत्प्रियेभ्य उत मह्यं च सर्वदा शिवा कल्याणरूपैवासीत् । तां अनुव्रतां जायां अक्षस्य संबंधी यः एकश्चासौ परश्च एकपरस्तस्य हनुमतो हेतोः अपारोधं अक्षं निघ्नता हेतुभूतेन तेन अपरुद्धवानस्मि धिङ्मामित्यर्थः ॥ पक्षे रतिं नाशयतः कामस्य वीर्यं बलं च धिग्धिगिति भावः

द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विंदते मर्डितारं ॥
अश्वस्येव जरतो वस्न्यस्य नाऽहं विंदामि कितवस्य भोगम् ॥ ११७॥

॥ ११६ ॥ द्वेष्टीति ॥ रावणबंधोः कस्यचिदुक्तिः श्वश्रूर्दारपक्षीयान् स्त्रीगणान् हितोपदेशकर्तॄन् द्वेष्टि जाया अपरुणद्धि भोगादौ निरुंधे नाथित उपततः मर्डितारं सुखयितारं परदारसंगं न विंदते अतोऽस्य कितवस्य भोगं शरीरं न विंदामि न पश्यामि अयं कामवेदनया मरिष्यत्येवेत्यर्थः ॥ तत्रदृष्टांतः । जरतो जीर्यमाणस्याश्वस्य मृत्युना क्रेत्रा वा नीतस्य शरीरं नदृश्यत एवमस्यापीत्यर्थः ॥ पक्षे विष्णुभक्त्या उपतापितः कामो भोगासक्तिं सुखास्वादलक्षणां रतिं च परिहरति

मंत्र- श्रद्धां च वशीकर्तुं न क्षमते अतोऽस्य स्वरूपं शीघ्रमेव नंक्ष्यतीति भावः ॥ ११७ ॥ रामायणं
सभामेतीति ॥ एवं हनुमता लंकादाहे कृते सति कितवो धूर्तो रावणः पृच्छमानः प्रश्नार्थीसन्
सभामेति जेष्यामीत्यहंकारेण तन्वा शरीरेण शूशुजानो वर्धमानः । वस्य जत्वं छांदसं ॥ अक्षासो
॥६२॥ अक्षसदृशाः कनिष्ठभ्रातरो बिभीषणादयः अस्य कामं मनोरथं वितिरंति विशेषेण तिरस्कुर्वंति

सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा ३ शूशुजानः ॥
अक्षासोऽस्य वितिरंति कामं प्रतिदीव्ने दधत आकृतानि ॥११८॥
उदीर्ष्वातः पतिवती ह्ये ३ षा विश्वावसुं नमसा गीर्भिरीळे ॥
अन्यामिच्छ पितृषदं व्यक्तां सते भागो जनुषा तस्य विद्धि॥११९॥

कीदृशाः प्रतिदीव्ने प्रतिजिगीषवे रामाय कृतानि सीताख्यपणितद्रव्यलाभसूचकानि लक्षणानि
आदधतः समर्थयंतः पक्षे सभाशास्त्रे अक्षासः प्रमाणानि प्रतिदीव्ने बोधाय शेषंप्राग्वत् ॥ अत्र प्रास्य
धारा इति मंत्रः पठनीयः सच व्याख्यात उपोद्घातएव तत्र सख्युर्विष्णोर्जामिं जायां सीताख्यां ॥६२॥
क्रन्दन्तमपि भगवान् न एति नप्राप्नोतीत्येवपादार्थः शेषं पूर्ववदेव ॥ ११८ ॥ एवमुक्त्वापि सभ्या

रावणं प्रार्थयंते ॥ उदीर्ष्वेति ॥ अतः सीताभिलाषनिर्बंधादुदीर्ष्व उद्गच्छ निवृत्तो भव हि यतः एषा पतिव्रती परभार्या विश्वावसुं रावणव्यामोहकारी गंधर्वः विश्वानि वसूनि यस्मिन् इति वा अवाप्त सकलकामं रावणं त्वां नमस्कारेण सह गीर्भिर्वाग्भिरीळे स्तौमि प्रार्थयामि अन्यां पितृगृहस्थां अप्रत्तां कन्यामिच्छ व्यक्तां विस्पष्टां जातस्त्रीलक्षणां सः सा स्त्री ते तव भागः जनुषा जन्मना

**उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा ॥**
**अन्यामिच्छ प्रफर्व्यं १ सं जायां पत्या सृज ॥ १२० ॥**

तस्य तं विद्धि प्राप्नुहि ॥ ११९ ॥ उदीर्ष्वेति ॥ अत्र द्वितीयमंत्रे इच्छेत्यंतं प्राग्वत् प्रफर्व्यं प्रकर्षेण फलाभ्यां स्तनाभ्यां वेति रंहतीति प्रफलर्वीः । लस्य रत्वं अंतलोपश्च छांदसः । प्रफर्व्यं सुस्तनीमित्यर्थः ॥ जायां सीतां पत्या रामेण संसृज साम कुर्वित्यर्थः ॥ पक्षे बोधप्रियां श्रद्धामपहाय विषयसुखदायिनीं श्रद्धामाश्रयस्वेति भावः ॥ बोधेन सह कुर्वतस्तवाऽपि कल्याणं भवति बुद्धानां च तेषां सर्वेषु लोकेषु कामचारो भवतीति सर्वकर्मफलभागित्वश्रवणात् ॥ १२० ॥

 एवं बोध्यमानेषु रावणादिषु किं वृत्तमत आह॥ उतत्व इति॥उतत्वः अपि चैकः प्रहस्तादिः पश्यन् एकेन 
हनुमता कृतं कदनं पश्यन्नपि वाचं वचनस्यार्थं न ददर्श मदांधत्वात् उतत्वः अप्येको रावणादिः

॥६३॥

उतत्वः पश्यन्नु ददर्श वाचमुत त्वः शृण्वन्नशृणोत्येनाम् ॥
उतो त्वस्मै तन्वं १ वि सस्त्रे जायेव पत्य उशती सुवासाः ॥ १२१ ॥
परा पूर्वेषां सख्या वृणक्ति वि तर्तुराणो अपरेभिरेति ॥

शृण्वन्नपि शुकसारणादिमुखेन परबलमाकर्णयन्नपि न शृणोति तन्मनसि न करोति दुराग्रहग्रस्त-
त्वात् उतो अपि त्वस्मै अन्यस्मै विभीषणाय तन्वं स्वरूपं वाक् स्वार्थं प्रकटीकरोति यथा उशती
कामयमाना जाया पत्ये सुवासाः ऋतुमती स्वं गुह्यं दर्शयति तद्वत् अन्यैरदृष्टोऽपि भावी बिभी- ॥६३॥
षणादिभिर्दृष्टइत्यर्थः ॥ १२१ ॥ ततस्ते किं चक्रुरत आह ॥ परापूर्वेषामिति ॥ पूर्वेषां जन्मबंधूनां

रावणादीनां सख्या सख्यानि स्नेहं पराहृणक्ति दूरीकरोति विभीषणादिः विशेषेण तर्तुरागः मरणं तर्तुकामः अपरैः कार्यबंधुभिः रामादिभिः सह सख्यानि एति अभिगच्छति अनानुभूतीः रावणादीनां भ्रांतिज्ञानानि अवश्यमेव शत्रून् जेष्याम इत्येवंरूपाणि अवधून्वानो दूरीकुर्वन् इंद्रः इदं

अनानुभूतीरवधून्वानः पूर्वीरिंद्रः शरदस्तर्तरीति ॥ १२२ ॥
अनृक्षरा ऋजवः संतु पंथा येभिः सखायो यंति नो वरेयं ॥
समर्यमा संभगोनो निनीयात्सं जास्पत्यं सुयममस्तु देवाः॥१२३॥

भाविकदनं पश्यतीति इदंद्र इदंद्र एव इंद्रो बिभीषणः पूर्वीः शरदः कालमृत्युं तर्तरीति अतिशयेन अमरत्वं प्राप्य तरति इदमीदृशमिति तमिदंद्रं संतमिंद्र इत्याचक्षते इति श्रुतिदृष्टमत्र इंद्रशब्दस्य निर्वचनं ज्ञेयं ॥ पक्षे पूर्वेषां कामादीनां अपरेषां शमादीनां अनानुभूतीर्देहाद्यात्मभ्रांतीः ॥ १२२ ॥ एवं कुर्वतां विभीषणादीनां पुरोहिताः स्वस्त्ययनं कुर्वंति ॥ अनृक्षरा इति ॥ ऋग्भ्यो वेदमार्गात्

मंत्र- क्षरंति ते ऋक्षराः राक्षसादयः कंटकाः तद्रहिताः अनृक्षराः अतएव ऋजवः पंथाः पंथानः संतु रामायणं
येभिः यैः पथिभिः नोऽस्माकं सखायः वरेयं वरे श्रेष्ठे भूस्थानं याति संचरति तं सर्वोपरि वैकुंठे
स्थितमपि भूस्थं रामं यंति गच्छंति अर्यमा देवो नः अस्मदीयान् संनिनीयात् रामेण सह ऐक्यं
॥६४॥ गमयतात् भगश्च संनिनीयात् तथा जास्पत्यं सीतारामयोर्दांपत्यं धर्मः सुयमं सुसंयतं अस्तु भोदेवाः

प्र त्वा मुंचामि वरुणस्य पाशाद्येन त्वाबध्नात् सविता सुशेवः॥
ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि॥१२४॥
आ सूर्यो अरुहच्छुक्रमर्णोऽयुक्त यद्धरितो वीतपृष्ठाः॥

॥ १२३ ॥ गच्छन् बिभीषणः सीतामाश्वासयति ॥ प्रत्वेति ॥ त्वा त्वां वरुणस्य पाशात् प्राणि
दुःखदात् प्रमुंचामि येन पाशेन त्वा त्वां सविता कर्माध्यक्षो देवः अबध्नात् सुशेवः सुसुखः ऋतस्य ॥६४॥
कर्मफलस्य योनौ भोगस्थाने सुकृतस्य पुण्यस्य लोके स्थाने अरिष्टां निर्दुःखां त्वां सहपत्या द-
धामि मा चिंतां कुर्वित्यर्थः ॥ वर्तमानसामीप्ये वर्तमानवन्निर्देशः ॥१२४॥ ततो बिभीषणे दासतां

गते रामः सेतुं कृत्वाऽतरदित्याह ॥ आसूर्यइति ॥ सूर्यः सूर्यवंशो रामः शुक्रं शुद्धं अर्णः समुद्रजलं अरुहत् केनोपायेनेत्यतआह ॥अयुक्तेति ॥ यत् यतः हरितः पर्वतवत्त्वसामान्यात् द्विराङंगुलिरूपान् पर्वतान् अयुक्त सेतुरूपेण योजितवान् वीतपृष्ठाः अनुच्चाः सुसमा इत्यर्थः ॥ ताश्चधीराः हनुमदादयः उद्धाननावं उदकदेशेन नावमिव अनयंत आनीतवंतःअगाधे जले कथमासां न मज्जनं जातं अत आह॥

उद्धान नावमनयंत धीरा आशृण्वतीरापो अर्वागतिष्ठन् ॥ १२५ ॥
अश्मन्वती रीयते संरभध्वमुत्तिष्ठत प्रतरतासखायः ॥ अत्रा
जहाम ये असन्नशेवाः शिवान् वयमुत्तरेमाभि वाजान् ॥१२६॥

आशृण्वतीरिति॥आशृण्वतीः आज्ञाकारिण्यः आपः समुद्ररूपाः अर्वाक् अतिष्ठन् उपस्थानं दासवदकुर्वन्॥पक्षे सूर्य आत्मा शुक्रमर्णः ब्रह्मसमुद्रम् हरितः इंद्रियनद्य आपो मनः॥ १२५॥अश्मन्वतीति॥ अश्मन्वती पाषाणवती तन्मयी सेतुरूपा नौ रीयते आक्रम्यते संरभध्वं त्वरध्वं उत्तिष्ठत प्रतरत समुद्रं

 भोः सखाय इति सेनापतिवाक्यं । अत्र पुरःस्थायां लंकायां ये अशेवाः अस्माकमसुखाः क्रूराअ- 
सन् अदीप्यंत तान् जहाम गच्छाम हंतुमिति शेषः ॥ अभि अभिमुखं वाजान् संग्रामान् शिवान्
जयप्रदान् वयं उत्तरेम कृतकृत्या भवेमेत्यर्थः ॥ पक्षे अश्मशरीरं अस्त्यस्यां साऽश्मन्वती ग-
 लितदेहाभिमानी ध्याननौरित्यर्थः ॥ शेषं सुगमम् ॥ १२६ ॥ उरुमिति ॥ समुद्रतरणानंतरं रा-

**उरुं यज्ञाय चक्रथुरु लोकं जनयंता सूर्यमुषासमग्निम् ॥ दासस्य**
**चिद्वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ॥ १२७ ॥**

क्षसैः सह युद्धे प्रवृत्ते भो नराः नररूपिणौ युवां यज्ञाय देवहिताय उरुं महांतं लोकं रक्षस्तमो
नाशनेन प्रकाशांचक्रथुः उ निश्चितं यतः सूर्यादीनां जनयितारौ युवां तथा दासस्य रावणस्य मायाः
नागपाशबंधाद्याः जघ्नथुः नाशयामासथुः युवां वृषशिप्रस्य महोक्षसदृशशरीरस्य पृतनाज्येषु ॥ पक्षे
यज्ञोपयोगाय मायाः लयविक्षेपरूपाः ॥ १२७ ॥ हरय इति ॥ हरयो वानराः धूमवत् धूसराः 
केतुवदूर्ध्वीकृतानि पुच्छानि यैस्ते धूमकेतवः वातो जूतो अतिवेगात् प्रवर्तिता यैस्ते वातजूताः

उपद्यवि अंतरिक्षे यतंते अंतरिक्षचरान् राक्षसान् बाधितुं यत्नं कुर्वंति पृथक् पृथक् प्रत्येकमिति यावत् । अग्नयः अग्निवदितरनैरपेक्ष्येण सर्वं राक्षसकुलं दग्धुं क्षमा इत्यर्थः ॥ पक्षे हरय इंद्रियाणि हार्दाकाशे यतंते प्रवेष्टुमिति शेषः । अग्निवन्निर्दोषाः ॥ १२८ ॥ रूपामिति ॥ रूपं रूपं प्रति रूपो बभूव यावंति राक्षसानां रूपाणि तावंति तत्प्रतिकूलानि रूपाणि दधारेत्यर्थः । तदस्य रामस्या

**हरयो धूमकेतवो वातजूता उप द्यवि ॥ यतंते वृथगग्नयः ॥ १२८॥ रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रति चक्षणाय ॥ इंद्रो माया-भिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शतादश ॥ १२९॥**

नेकरूपत्वं प्रति चक्षणाय ।विरोधिरूपांतरप्रत्याख्यानाय । ननु राम एव विश्वरूपोस्ति अतस्तेषु रूपेषु स्वावयवेष्विव अन्योऽन्यं बाध्यबाधकभावो न युक्त इत्याशंक्याह ॥ इंद्र इति ॥ इंद्रो रामः पाशान्यायेन बहुवचनमवयवाभिप्रायं । तथाच सत्त्वप्राधान्येन देवरूपः रजःप्राधान्येन असुररूपः तमःप्राधान्येन राक्षसरूप इति पुरुरूपो बहुरूप ईयते गम्यते । यथा सर्वरसोपादानस्यापि जल-

स्य स्वाभाविकं माधुर्यमिक्षुद्राक्षादिष्टातिशयेनाभिव्यजते । निंबुमरिचादिषु तदभिभूयौपाधिकमम्लत्व
कटुत्वादिकं प्रथते तद्वदिदं द्रष्टव्यम् । अतस्तेषां बाध्यबाधकभावो युज्यत एव । हि यस्मात् अस्य
इंद्रस्य दशशता सहस्रं अनंता इत्यर्थः । हरयो वानरा राममनोनुवर्तिनः कायव्यूहे योगिशरीरां-
तरवद्युक्ताः सन्नद्धाः दृश्यंत इति शेषः । राम एव सर्ववानररूपोऽभवदित्यर्थः ॥ तथाच श्रुतिः
" अयं वै हरयोऽयं वै दश च शतानि च सहस्राणि च बहूनि चाऽनंतानि चे " ति । पक्षे देवासुराः
शमकामादयः इंद्र आत्मा हरय इंद्रियवृत्तयः शेषं समानं ॥ १२९ ॥ य इति ॥

**यः सृबिंदमनर्शनिं पिप्रुं दासमहीशुवं ॥ वधीदुग्रो रिणन्नपः ॥ १३० ॥**

यो रामः सृबिंदं सरंति पतंति बिंदुवद्वर्तुलाः शिरोरूपा अवयवा यस्य स सृबिंदवः ।
अदंतत्वं आर्षं । अत एवानर्शनिं अगतिकं । ऋष गतिस्तुत्योरित्यस्य सौत्रस्य धातोरिदं रूपम् ।
पिप्रुमिव पिप्रुं शरीरस्थचर्मकीलवज्जगत्यां मष्याकारचिन्हरूपं दासं रावणं सर्पवत् सविषो
च्छ्वासं वधीत् अवधीत् । उग्रः यतः सामुद्रीरपिरिणन् सेतुकरणेन हिंसन् तस्य कृतानि प्रवोच-

तेति पूर्वमंत्रगतेनान्वयः । सृबिंदादयः पंचराक्षसा इति भाष्यं । पक्षे सृबिंदं निर्वीर्यं अनर्शनिं चित्तनिरोधादगतिकं पिप्रुं प्रसर्पणशीलं लोभकुंभकर्णम् दासं दस्यत्युपक्षिणोतीति कामरावणं अहीशुवम् क्रोधेंद्रजितं च अपः देहं रिणन् प्रविलापयन् योऽवधीत् तस्य योगिनः कृतानि ॥ १३० ॥

भद्र इति ॥ भद्रः रामभद्रः भद्रया सीतया सह सचमानः सज्जमानः आगात् दंडकारण्यमि-

**भद्रो भद्रया सचमान आगात् स्वसारंजारो अभ्येति पश्चात् ॥**
**सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्नुशद्भिर्वर्णैरभि राममस्थात् ॥ १३१ ॥**

त्यर्थात् स्वसारं अंगुलयः स्वसारः तद्वंतं सीतायाः पाणिं गृहीतुंजारो रावणः पश्चात् रामात्परोक्षे अभ्येति आगत इति पूर्वोक्तानुवादः । ततो रावणे हते सति जाया गार्हपत्य इति श्रुतेः जाया सह चरोऽग्निःद्युभिः द्युलोकसाधनतया द्युशब्दवाच्यः रामदारैः सह रामं रामस्याऽभिमुखं अस्थात् स्थितवान् सुप्रकेतैः शोभनचिन्हैरिति दारानिर्दोषत्वं सूचितं वितिष्ठन्नस्थादिति संबंधः तिष्ठन्नासीदित्यर्थः ॥ रुशद्भिर्दीप्यमानैः वर्णैः लोहितादिवर्णज्वालाभिरुपलक्षितः अयंचार्थः पुनः पत्नीमाग्नि-

 रदादिति मंत्रांतरेपि दृष्टः ॥ पक्षे भद्रो बोधः भद्रया श्रद्धया जारः कामः अग्निर्वाक् ॥ १३१ ॥ 
तेऽवदन्निति ॥ ते प्रसिद्धाः देवर्षयोऽग्निना आनीतायाः सीतायाः ब्रह्मकिल्बिषे ब्रह्मचर्यरक्षणाख्ये
दोषेविषये ऋतेन सत्यशपथेन अवदन् इयं निर्दोषेति .शपथपूर्वकं राममवदन्नित्यर्थः ॥ ते के

॥६७॥ तेऽवदन्प्रथमा ब्रह्मकिल्बिषेऽकूपारः सलिलो मातरिश्वा ॥
वीळ्हुरास्तपउग्रो मयोभूरापो देवीः प्रथमजा ऋतेन ॥ १३२ ॥
सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः ॥
अन्वर्तिता वरुणो मित्रआसीदग्निर्होता हस्तगृह्यानिनाय ॥ १३३ ॥

अकूपारः समुद्रः सलिलो निर्मलः सलिलाधिपो वा वीळ्हुराः कालचक्रचालकाः निमेषाद्यधिष्ठा-
त्र्यो देवताः तपो धर्मः उग्रः मयः सुखं भवत्यस्मादिति मयोभूर्वातः आपः शरीरं तच्चिन्हानि वे-
त्यर्थः ॥ १३२ ॥ ते किमवदन्नित्यत आह ॥ सोम इति ॥ प्रथमो राजा सोमः ब्रह्मजायां बृह- ॥६७॥
स्पतिभार्यां पुनः हृत्वा तस्यां पुत्रमुत्पाद्य पश्चात्प्रायच्छत् दत्तवान् अहृणीयमानः अनिंद्यमान इतरैः

तारायां पातिव्रत्येन स्वकृतदोषाभावात् तस्याश्च अन्वर्तिता अनुगंता वरुणो मित्र आसीत् अग्नि-होता एनां हस्तगृह्य हस्ते गृहीत्वा आनिनाय तस्मात्तारावदियं स्वयमदुष्टा त्वया स्वीकार्येति भावः ॥ १३३ ॥ हस्तेनेति ॥ अस्याः हस्तेनैव ग्राह्यः गृहणं तदेव आधिः दुःखं जातं न तारा-वत् संगेन यतः सर्वे देवाः ब्रह्मजाया ब्रह्मचर्यवती परभार्येयमिति चाऽवोचन् इतएव अनिच्छं-

**हस्तेनैव ग्राह्य आधिरस्या ब्रह्म जायेयमिति चेदवोचन् ॥**
**न दूताय प्रह्ये तस्थएषा तथा राष्ट्रं गुपितं क्षत्रियस्य ॥ १३४ ॥**

तीमेनां धर्षयतस्तव नलकूबरशापनाशो भविष्यतीत्यवदन्नित्यर्थः ॥ अतो हेतोः दूताय पार्षदाय रावणाय प्रह्ये प्रकर्षेण जिहीत इति प्रहीस्तस्मै वेगेन गच्छते एषा न तस्थे न तमनुसृतवती तथा तेन प्रकारेणाऽनया क्षत्रियस्य रामस्य राष्ट्रोपलक्षितं कुलधर्मादिकं गुपितं रक्षितम् ॥ १३४॥

 देवा इति ॥ एतस्यां निमित्तभूतायां भीमामृत्युप्रदा उपनीता बलाद्गृहीता ब्राह्मणस्य 
ब्रह्मविदः दुर्धां नरकयातनां दधाति परमेव्योमन् परलोके ॥ १३४ ॥ ब्रह्मचारीति ॥ ब्रह्म

देवा एतस्यामवदंत पूर्वे सप्तऋषयस्तपसे येनिषेदुः ॥ भीमा
 जाया ब्राह्मणस्योपनीतादुर्धां दधाति परमे व्योमन् ॥ १३५॥
ब्रह्मचारी चरति वेविषद्विषः स देवानां भवत्येकमंगं ॥ तेन
जायामन्वविंदद्बृहस्पतिः सोमेननीतां जुव्हं१न देवाः॥१३६॥
पुनर्वै देवा अददुः पुनर्मनुष्या उत ॥ राजानः सत्यं कृण्वा
नाब्रह्मजायां पुनर्ददुः ॥ १३७ ॥

चारी प्राणः स्वाभाविकसंगृहीतः विषो व्याप्याः प्रजाः वेविषत् व्याप्नुवन् एकं मुख्यं अंगं चक्षुः
तेन प्रमाणभूतेन जुव्हं न जुव्हस्थहविवित् शुद्धां ॥१३६॥ पुनरिति ॥ देवाअग्न्यादयः मनुष्याः 
दशरथादयो राजानः इंद्रयमवरुणसोमाः सत्यं शपथं कृण्वानाः ददुः रामायेति शेषः॥ १३७ ॥

पुनर्दायेति ॥ विवाहापेक्षया इदानीं पुनर्दत्वा देवैर्निकिल्बिषं निर्दोषं यथास्यात्तथा कृत्वी कृत्वा दत्वा च उरुगायं महाकीर्तिं उपासते देवर्षयः । कथंभूतं पृथिव्याः ऊर्जमन्नाद्यं भक्ताय विभज्य विभीषणसुग्रीवलक्ष्मणादिभ्यो राज्यानि विभज्य देवब्राह्मणयज्ञार्थं च विभज्य स्थितमिति शेषः

पुनर्दाय ब्रह्मजायां कृत्वी देवैर्निकिल्बिषं ॥
ऊर्जं पृथिव्याभक्तायोरुगायमुपासते ॥ १३८ ॥
सृजः सिंधूँरहिना जग्रसानाँ आदिदेताः प्रविविज्रे जवेन ॥
मुमुक्षमाणा उत या मुमुत्रेऽधेता नरमंते नितिक्ताः ॥ १३९ ॥

॥ १३८ ॥ तत्र प्रथमं प्रकृतैरेव कर्मभिरुपासकाः स्तुवंति ॥ सृज इति ॥ सिंधून् समुद्रान् सप्तचतुरो वा अहिना रावणस्य कालसर्पेण जग्रसानान् ग्रस्तान् सृज असृजः अभयदानेन पुनः सृष्टवानसि तथा आदित् अस्मादेवरावणात् एताः सिंधुभार्याः नद्यः प्रविविज्रे प्रकर्षेण भीताश्चलितवत्यः जवेन वेगेन तथा मुमुक्षमाणा रावणकारागारादात्मनो मोक्षमिच्छंतः मुमुत्रे मुक्ताः अथ

मंत्र- अन्यदा एता देवताः न रमंते इति एव यतः नितिक्ताः नितरां कटुकाः शोकोपहतरसाः इदानीं रामायणं
सम्यगवर्तत इत्यर्थः ॥ पक्षे सिंधून् मैत्र्यादीन् यमनियमप्राणायामप्रत्याहारसंयमतर्कान् वा पूर्वो-
॥६९॥ क्तान् एताः शमदमादयः मुमुक्षमाणाः जीवाः अहिना मोहेन ॥ १३९ ॥ सीतारामं प्रत्युपगते
त्यन्यापदेशेनाहुः ॥ सध्रीचीरिति ॥ सध्रीचीः सहधर्मचारिण्यः । पूजार्थं बहुत्वं । सिंधुं समुद्रवद-

**सचंत यदुषसः सूर्येण चित्रामस्य केतवो रामविंदन् ॥**
**आयन्नक्षत्रं ददृशे दिवो न पुनर्यतो न किरद्धा नुवेद ॥ १४० ॥**

पारं रामं उशतीरिव कामयमाना नद्यइव आयन् आगताः आसां जारो रावणः सनात् सर्वदा
पूर्भित् शरीरशोषणो यः सः आरितो हिंसितः ॥ पक्षे समूले कामे हते श्रद्धादयो ब्रह्मात्रिमुखं
प्रापुरित्यर्थः ॥ हे इंद्र हे राम ते तव अस्तंगृहं अयोध्यां हार्दाकाशं वा पार्थिवानि वसूनि सर्वे ॥६९॥
कामा आजग्मुः अस्मे अस्मांश्चत्वद्दर्शिनः पूर्वीः सूनृताः वेदस्य वाचः एषसर्वेश्वरइत्यादयो ऽहं
ब्रह्मास्मीत्यादयोवा आजग्मुः ब्रह्मभावेन बहिर्भवंतं हार्दाकाशेचाऽत्मानं त्वां पश्यामइत्यर्थः॥ १४०॥

॥ ईदृशज्ञाने हेतुमुपासनामाह ॥ सचंत इति ॥ केतवो ज्ञानवंतोऽस्य रामस्य रां संपदं ऋचः सामानियजूंषि साहिश्रीरमृतासतामिति श्रुतांत्रयीं तत्सारभूतप्रणवरूपां शब्दतोऽर्थतश्चाविंदन् यस्त्वत्र शब्दमय्यां संपादिउकारो नास्तीति मन्यते तं प्रत्येवं वदेत् यत् यतः उषसः उषसं उषोवदल्पप्रकाशं विराजं अकाररूपं सूर्येण पूर्णप्रकाशेन हिरण्यगर्भेण उकाररूपेण सचंत ऐक्यमनयन् कार्यत्वसामान्यादकारमध्ये एवउकारस्यांऽतर्भावो बोध्यः ॥ एवमपि अमित्येवापेक्षितं नतु रामित्यतआह चित्रामिति चित्रभानुत्वाच्चित्रोऽग्निः रेफः सोऽस्यामस्तीति चित्रां तां सस्वरशब्दवर्तीं ततः सवर्णदीर्घे रामित्यर्थः ॥ चित्रशब्दान्मत्वर्थीये अर्शआद्यचि टाप् । एवंचरेफार्थेनाग्निनाचिदाभासेनसहितानि समष्टिस्थूलसूक्ष्मकारणानि रामित्यनेन दर्शितानि अर्द्धमात्रातु प्रणववदत्राप्यंतरस्ति यां रां केतवोऽविंदन् सापुनर्ददृशे रामिति रेफाकारमकाराः पुनर्दृश्यंतइत्यर्थः ॥ तत्र दृष्टांतो दिवोनेति । नेत्युपमार्थः । दिवः स्वप्नाः स्वल्पं प्राप्य यथा जाग्रद्दृष्टमेवार्थजातं पुनस्तत्सदृशं दृश्यते तद्वत्समष्टित्रयवाचकात् रांपदात् क्रमेण सदृशव्यष्टिस्थूलसूक्ष्मकारणवाचि रा-

मंत्र- मिति पदं पुनः पठेदित्यर्थः ॥ अस्य विशेषणं आयन्नक्षत्रामिति आइति स्वरूपं यइवाचरतीतियत् रामायणं
आचाराक्किबंतात् यत् प्रातिपादिकात् कर्तरिक्किबितितास्मिंस्तुक् । तेन यइति स्वरूपं सिद्धं इदं वर्णद्वयं
द्वितीयेन रामित्यनेनसह पठितंचेत् रामायेति चतुर्थ्यंतं नामभवति नक्षत्रपदेन मुख्यत्वाच्चंद्रः तेनाऽस्य
॥७०॥ कारणं हृदयान्मनो मनसश्चंद्रमा इति श्रुतिप्रसिद्धं हृदयं गृह्यते । यथा ताअन्नमसृजंतेत्यन्नशब्देन
पृथिवी तद्वत् तेनागमप्रसिद्धो हृदयशब्दार्थो नमःशब्दउद्धृतो भवति । एषां सर्वेषां वर्णानां संक-
लनेनरां रामायनम इति उद्धृतोवेदितव्यः । एतत्फलमाह । यतो नकिरद्धानुवेदेति यत इति तस्य
यतमानस्य यतेः नकिः न किरति इतस्ततो विक्षिप्यत इति नकिः अविक्षिप्तं मनः अद्धा साक्षात्
नुनिश्चितं देवजानाति एनं मंत्रं जपन्नेतदर्थं मनसा साक्षात् करोतीत्यर्थः॥मनसैवेदमाप्तव्यमिति श्रुतेः
। मंत्रार्थस्तु रां रां चासौ अश्चेति रां रामः तस्मै रामायनमस्करोमि प्रव्हो भवाम्यहं तत्राकारोवै
सर्वा वागिति श्रुतेः । अर्धमात्रागर्भितौसाभासौ व्यष्टिसमष्टित्रिकौ अकारार्थः ईप्सिततमत्वंचतु ॥७०॥
र्थ्यर्थः । तच्च तत्रान्वितमपि नांतःप्रज्ञमित्यादि स आत्मा स विज्ञेय इत्यंतश्रुत्या इतरेषां द्वादशानां

निरस्तत्वेनार्धमात्रार्थैत्रयोदश एव पर्यवस्यति । तेन नम्यत्रयं नन्तृत्रयं नतिश्चैतेषां प्रकाशार्थं यदी प्सिततममर्धमात्राख्यं वस्त्वहमस्मीति तत्र नान्तःप्रज्ञमिति सौत्रस्य चिदाभासस्य निरासः नबहिः प्रज्ञमिति वैराजस्य नोभयतःप्रज्ञमित्युपहितानुपहितोभयस्वरूपदर्शिन ऐश्वरस्य न प्रज्ञमिति तत्स हृशत्वेऽपि तदन्यस्य तैजसीयस्य नप्रज्ञानघनमिति विशेषाविज्ञानहीनस्य प्राज्ञीयस्य तथा अदृष्टमिति

**तवश्रिये मरुतोमर्जयंतरुद्रयत्तेजनिमचारुचित्रं ॥**

दृष्टसजातीयस्य सौत्रस्योपाधेः अव्यवहार्यमिति व्यवहारार्हस्य बैजोपाधेः अग्राह्यमिति योगिग्राह्य स्यैश्वरोपाधेः अलक्षणमिति विशेषलक्षणवतो वैश्वोपाधेः अचिंत्यमिति चिंतानिर्वर्त्यस्य तैजसोपाधेः अव्यपदेश्यमिति नकिंचिदवेदिषमिति व्यपदेशार्हस्य प्राज्ञोपाधेः ऐकात्म्यप्रत्ययसाद्दामिति षण्णामामा सानां प्रपंचोपशममिति षण्णामुपाधीनां अद्वैतमिति सर्वेषां निरासः । शिवमित्यर्थमात्रार्थानंदमात्र स्य परिशेष इति विभागोज्ञेयः ॥ १४० ॥ एतस्य मुख्यमुपासकंरुद्रंस्तुवंति ॥ तवश्रिय इति ॥ हेरुद्र हे हनुमन् तवश्रियेत्वदधिगतसंपत्प्राप्त्यर्थं रामविद्यावाप्त्यर्थं मरुतोदेवाः मर्जयंतशोधयंति त

मंत्र- पोध्यानादिनात्मानं यत् यतस्ते तवजनिमज्जन्मचारुरम्ये यतस्त्वया चित्रंपदं रेफाख्येनाग्निनायुक्तं रामायणं
चित्रामस्यकेतवो रामविंदान्नित्युदाहृतमंत्रे प्रसिद्धं रामित्येवंरूपं विष्णोरुपमं विष्णुवाचकस्य पदस्य
समीपेदृश्यमानं यथास्यात्तथानिधायिन्यधायिनिहितं अत्र गंगणपतयेनमः दुंदुर्गायैनम इति मंत्र
॥७१॥ शास्त्रमर्यादया रामित्यस्य समीपेसपूर्वकमेव विष्णुवाचिपदंनिधेयं तच्चराघवादिपदेभ्यः शीघ्रतंरराम

पदं यद्विष्णोरुपमंनिधायितेनपासिगुह्यंनामगोनां ॥ १४१ ॥
अहं मनुरभवं सूर्यश्चाहं कक्षीवांऋषिरस्मिविप्र ॥

पदमेववर्णसाम्याधिक्यादुपस्थितं भवतितेन रामपदेनसहनामनमंत्यनेनेतिनामनतिवाचिपदं उपा
सिनामविशिनष्टिगोनांगुह्यमिति गोनामिंद्रियाणां गूहनस्थानं हृदयमित्यर्थः । तेनहृदयशब्दितं नमः
पदमुद्धृतं भवतितद्योगाच्च रामपदादपि चतुर्थी भवति तेन रां रामायनम इति त्र्यक्षराण्यद्धृतानि भवंति
यतस्त्वयाचित्रं पदं विष्णोरुपमं निधायियतश्चतेन सह गोनांगुह्यनामपासि अतस्तेजनिमचार्वित्यन्व ॥७१॥
यः ॥ १४१ ॥ एवं राममुपासीनो रामतादात्म्याभिमानात्सार्वात्म्यं प्राप्तोवामदेवापरनामारुद्रो राम

विशेषणैरेवात्मानंस्तौतीत्याहबृहदारण्यकश्रुतिः तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवंसूर्य श्चेतीति ॥ यस्मिन्वंशेऽहमुत्पन्नस्तत्प्रवर्त्तकौमनुसूर्यावहमेवाभवं यश्चमदवतारनिमित्तं दशरथेनतो षितः कक्षीवान् ऋषिर्विप्रोदीर्घदशी भाविकार्यज्ञः सोप्यहमेवास्मि अहं आर्जुनेयपुत्रं कुत्सं कुत्स नामानं पृञ्जे अर्जुन्याः पुत्रं पूर्वबालत्वादपक्कमेव मृतं संतंनितरांभर्जितवानस्मिदीर्घायुःप्रदानेन बहु

**अहं कुत्सामार्जुनेयं पृञ्जेहंकविरुशना पश्यतामा ॥ १४२ ॥**

**दूरंकिलप्रथममाजग्मुरासामिंद्रस्ययाःप्रसवेसस्रुरापः ॥**

तरतपनपरिस्यंदसंसर्गात् शिथिलतरत्वचं कृतवानस्मीत्यर्थः तथा कवेः पिता भृगुः अन्नंविराडितिव त्कारणे कार्योपचारः तव भार्यां अन्योहरिष्यतीतिमह्यंशापं ददद्यो भृगुः सोप्यहमेवेत्यर्थः तथानु उशनाकवेः पुत्रः शुक्रोमच्छत्रूणां तेजोवृद्धिकरः सोप्यहमेव अतोमामांसर्वात्मानं श्रीरामभद्रंपश्यत भोः साधका इति शेषः ॥ १४२ ॥ एवं जीवन्मुक्तस्य स्वार्वात्म्यमुक्त्वाविदेहमुक्तस्य कैवल्य माह ॥ दूरंकिलेति ॥ प्रथमाः पूर्वेसनकाद्याः आसांआपोअद्भ्यःसकाशाद्दूरंजग्मुः आपइंद्रस्यात्मनः

मन्त्र- प्रसवेसृष्टिकर्मणि प्रसस्रुः ब्रह्मांडरूपेणप्रसृताः सकारणे पिंडब्रह्मांडे परित्यज्य शुद्धं ब्रह्मप्राप्ता इत्यर्थः । अन्येतु आसामपां अग्रं अवसानप्रत्यासन्नोभागः क्वस्वित् तथाबुध्नोमूलं क्व मध्यं च क्व भो आपः वः युष्माकं अंतश्च नूनंनिश्चितं क्वस्विदस्ति तं जानीम इति भ्राम्यंतीत्यर्थः ॥ १४३ ॥ एवं

॥७२॥ सफलोपासनांसमाप्यतत्प्राप्तिकामैस्तत्संप्रदायप्रवर्त्तको रुद्रोप्याराधनीय इत्याह ॥ प्रवःपांतमिति ॥

**क्वस्विदग्रंक्वबुध्नआसामापोमध्यंक्ववोनूनमंतः ॥ १४३ ॥**
**प्रवः पांतं रघुमन्यवोंधोयज्ञं रुद्राय मीळ्हुषेभरध्वं ॥ दिवो**
**अस्तोष्यतुरस्य वीरैरिषुध्येव मरुतो रोदस्योः ॥ १४४ ॥**

हे रघुमन्यवः राम व्रतवो रामोपास्तिकामा इति यावत् मीढुषे विद्यामृतवर्षिणे रुद्राय यज्ञंभर की दृशं यज्ञंवः युष्माकं अंधः अन्नं तद्विकारं देहं मनश्चपांतं रक्षंतं "अन्नमयं हि सोम्य मनः" इति देह वन्मनसोप्यत्रविकारत्वंश्रुतं कीदृशमंधः यत् ।दिवः स्वर्गापेक्षयापि अस्तौषिस्तुतं वेदे ता अब्रुवन्सु कृतंबतेति मानुषदेहस्य देवताभिरपि पुण्यत्वेन स्तुतत्वात् असुरस्य सुरांविनाप्यमरस्य ब्रह्मणोवीरैः ॥७२॥

पुत्रैः सनकादिभिरस्तौषीति संबंधः । मरुतां बाणवदाशुगाः प्राणाः रोदस्योर्भुविदिविचवसतां पुंसांनृणां देवानांच इषुधौ निषंगे इवदेहे अर्द्धनिष्क्रांताः संति इषुध्येति सुपआच् चंचलत्वाज्जीवितस्य शीघ्रं तारकप्राप्तरुद्रंयजेतेतिभावः ॥ १४४ ॥ अनिज्यमानोपि रुद्रो देशविशेषे कालविशेषेचकारुणिकत्वात्तारकं जनमात्रस्योपदिशतीति । अत्रहिजंतोः प्राणेषु प्रमाणेषु रुद्रस्तारकं ब्रह्मव्याचष्टेयेनासावमृती भूत्वामोक्षी भवतीति अविमुक्तं प्रकृत्य जाबालाम्नातमर्थं ऋषि-

## हिरण्यकर्णम्मणिग्रीवमर्णस्तेनोविश्वेवरिवस्यन्तुदेवाः॥

राह । हिरण्यकर्णमिति हरणात् हिरण्यं तारकं महावाक्यं कर्णेपतति येनतत् हिरण्यकर्णमणिः आत्मतत्त्वं ग्रीवास्थेन उत्क्रममाणप्राणेनलभ्यते यत्रतत् मणिग्रीवं अर्णोजलंनोऽस्माकं विश्वे देवाः सर्वाणींद्रियाणि वरिवस्यंतु सेवंतां । अत्राहोरात्रपदस्येः पूर्वापरवर्णलोपात् होरापदमिव हिरण्य कर्णमणिग्रीवपदयोरपिपूर्वापरात्रयवलोपेन मणिकर्णपदं निष्पन्नं स्त्रीत्वं लोकात्तेन मणिकर्णिका रूपमर्णोत्रग्राह्यं । पदद्वयस्यैकस्वर्यपाठेनांगांगिभावावगमात् तत्त्वज्ञानस्य वाक्यकारणत्वे

न तदर्थयोरपि तथात्वावगमाच्च अतोऽत्रार्णःशब्देन तदभिमानिनीं देवतामालक्ष्य तस्यांच विग्रह- वत्त्वं प्रकल्प्यतत्रालंकारक्लप्त्यर्थं पदद्वयमिति क्लिष्टकल्पनानोत्तिष्ठति गौरवादैकस्वर्यपाठ विरोधाच्च अत्रहिवैदिकाः प्रथमं पदमाद्युदात्तं द्वितीयं सर्वानुदात्तंच पठंतीतिप्रसिद्धं नचतस्य सर्वानु दात्तत्वे पूर्वावयवत्वमंतरेणान्यन्निमित्तमस्तीति स्वरशास्त्रविद एव विदांकुर्वंतु अर्णसः सेवायाः फल माह । अयं इति । अयं ईश्वरोमहारुद्रः उदाहृते सूक्ताद्यमंत्रेदृष्टः गिरिधारकरूपाः उस्राः मंत्र

**अयोंगिरःसद्यआजग्मुषीरोस्राश्च किंतूभयेष्वस्मे ॥ १४९ ॥**

सिद्धिरूपाः कामधेनवश्चसद्यः तपोजपादिकं विनैव अकस्मादाजग्मुषीः आगमनशीलाः सर्वेअस्मे अस्मान् चाकंतु तर्पयंतु उभयेषुसविकल्पकनिर्विकल्पकभावेषुसिद्धिभिः स्वरूपानंदेनचप्री- णयंतु अत्रसमाधिव्युत्थानव्यत्ययपेक्षयाबहुत्वं आइत्यस्यावृत्त्यासद्य आजग्मुषीरित्यस्य पदद्वयस्या- प्यावृत्तिः अनाराधितोपि रुद्रोमणिकर्णिकायामंतकाले तारकब्रह्मोपादिशतिकिं पुनराराधितइति तदु- भयं तारकार्थिना न मोक्तव्यमित्यर्थः यत्तुवर्णोऽरणीयमपत्यमितिव्याख्यातंतदर्णःशब्दस्य उदक

नामसुपाठादपत्यनामस्वपाठाच्च श्रुतहान्यश्रुतकल्पनाप्रसंगादुपेक्ष्यं ॥ १४५ ॥ अतः परंविग्रह धर्मैरेवस्तुवंति नसस्व इति ॥ हेवरुण हेवरणयिसः दक्षःतत्सामर्थ्य समुद्रोल्लंघनादि हनुमदादीनां स्वः स्वकीयं नभवति किंतुतवैवसा धृतिः अधिष्ठातृत्वं यतो जायान् भवान् ईश्वरः कनीयसोऽस्मदादेर्जीवस्य उपारे समीपेस्ति अतस्त्वदीयेनैव सामर्थ्येन समुद्रतरणादिकमेतेकारिताः अन्यसाम-

**नसस्वोदक्षोवरुण धृतिः सासुरामन्युर्विभीदको अचित्तिः ॥**
**अस्ति ज्यायान्कनीयसउपारे स्वप्नं नेदनृतस्यप्रयोता ॥ १४६ ॥**

र्थ्येनान्यः करोतीत्यत्रदृष्टांतः सुरेति सुरामद्यंमन्युः क्रोधः बिभीदकः बिभीतकः तत्स्थकलिः अचित्तिः भूतपित्ताद्यावेशजन्य उन्मादः एतैराविष्टः पुरुषोऽशक्तोपिशक्तसाध्यं कर्मकरोति तद्वदय मपीत्यर्थः ॥ जायां संविविशिनष्टि स्वप्नश्चनेति । स्वप्न इव इत् अनृतस्येव भयसुखादेस्तद्धेतोश्च प्रयोता संयोजयिता वियोजयिताच । युमिश्रणामिश्रणयोरित्यस्य रूपं । यः स्वप्नवत्कृतस्त्वं प्रपंचं

मंत्र- सृजति संहरतिच तस्यअस्मदुपबृंहणंकियादितिभावः। १४६॥लोकस्थोप्यलौकिकं कर्मकरोषीत्याह॥ रामायणं
॥७४॥ त्वंहेति ॥ हेइंद्र त्वं ह प्रसिद्धंत्यत् इतरेषां परोक्षं कुत्सं ऋषिं आवः रक्षितवानसिकदा समर्येका
लेनसह स्पर्द्धायां सत्यां तन्वामृतस्य पुत्रस्य शरीरेण सहागतस्य पितुर्वाक्यं शुश्रूषमाणः मनसि

त्वंहत्यदिंद्र कुत्समावः शुश्रूषमाणस्तन्वासमर्यें ॥
दासंयच्छूद्रंकुयवंन्यस्मा अरंधयआर्जुनेयाय शिक्षन्॥१४७॥
यत्रौषधीः समग्मत राजानः समिताविव ॥

कुर्वन् मृतं पुत्रमानीयद्वारि शोचतोविप्रस्य वाक्यं श्रुत्वायममपिजित्वा तत्पुत्रमानीतवानसी-
त्यर्थः । कथंमृतमापिरिक्षितवानित्यत आह दासमिति दासं शूद्रं शूद्रस्यायोग्येन तपसाशुष्यंतंकु
यवंकुत्सितेन स्वस्य दोषहेतुना मुनिधर्मेण युज्यते स्वधर्मेणच सेवया वियुज्यत इति कुयवं अस्मै
आर्जुनेयाय अर्जुन्याः पुत्राय कुत्सायतज्जीवनार्थं न्यरंधयः नितरांहिंसितवानसि शिक्षन् शिक्षयन् ॥७४॥
धर्ममर्यादां॥ १४७॥एवंरामभद्रं स्तुत्वा हनुमता सह जांबवंतं स्तुवंति ॥यत्रौषधीरिति ॥ यत्रहनुमति

जांबवतिवाद्रोणाचलस्यानेतरि सर्वौषधीस्वरूपगुणाभिज्ञेवानिमित्तभूत्ते सति ओषधीः सर्वाः ओषधयः सशल्ययो राघवयोर्विशल्यकरणार्थाः समग्मतसंगताः तत्रदृष्टांतो यथाराजानः समितौ सभायां संगच्छंते तद्वत् समिताविव सविप्रो व्यापकः सर्वौषधीनामानेताप्रयोक्तावाभिषक् रोगक्षय कृदित्युच्यते सएवरक्षोहारक्षोहंतॄणांरामादीनां जीवनप्रदानात् अमीवचातनः अमीवान् दुष्टान्

**विप्रः सउच्यते भिषग्रक्षोहाऽमीवचातनः ॥ १४८ ॥**

**स्त्रक्वेद्रप्सस्यधमतः समस्वरन्नृतस्ययोनासमरंतनाभयः॥**

हंतुं चातयते प्रार्थयते सतथा दुष्टवधकाम इत्यर्थः ॥ १४८ ॥ अथ सीतादीन्स्तुवंति स्त्रक्वे इत्यादिनानवर्चेन सूक्तेन आंगिरसः पवित्र ऋषिः पवमानसोमोदेवता सोमइति विष्णोरेवनाम हविरातिथ्यं निरुप्यते सोमेराजन्यागत इत्युक्रम्य वैष्णवोभवति विष्णुर्वै यज्ञस्तस्मा एतद्धविरातिथ्यं निरुप्यत इत्युपसंहरन् यथा दध्यादेर्द्रप्सः अत्यम्लतया बुद्बुदाकारेण उपर्यागतोभागः तद्वदुद्गीत स्यद्रप्सस्य रावणाधमतो लोकान् तापयतः कर्मणि षष्ठी तं प्रतिस्त्रक्वः सरणं अभिसारः तस्मि

न्कर्त्तव्येसति समस्वरन् सम्यग्जयशब्दमकुर्वन् योद्धारः ततश्चऋतस्य योनायोनौ ऋतस्य योनिरितिपदं जलनामसुप्रविष्टं भाष्येतु यज्ञस्योत्पत्तिस्थाने इतिव्याख्यावं नाभयःजलस्य गर्भेगताः अद्भ्यः पृथिवीतिश्रुतेर्जलादुत्पन्नावा भूमयः कविनादृष्टरूपाःसमरंत सम्यक्कुमज्जनंविना अगच्छंत यस्यस्वकंनाभयः जलेऽतरंत सः असुरोरावणाख्यः त्रीन्कपिंजलानालभेतेतिवत् बहुत्वं प्रातिपदिकार्थस्य त्रित्वस्य त्रित्वे पर्यवस्यति तेननवसंख्यान् मूर्ध्नोमस्तकान् चक्रे छिन्नवान् कदा आरंभे

**त्रीन्समूर्ध्नो असुरश्चक्रा आरभेसत्यस्यनावःसुकृतमपीपरन् ॥ १४९॥**

आरभ्यत इत्यारभो यज्ञस्तस्मिन् रावणेन हि नव शिरांसि वह्नौहुतानीत्युपाख्यायते अतस्तस्य वधार्थं महानेव यत्न आस्थेय इत्यर्थः।जलेदृषत्संगस्य किंफलमत आह। सत्यस्येति। सत्यस्य धर्मस्य संबंधिन्योनाव इवनावः तारकाः शिलाः सुकृतं शोभनकर्माणंरामंससहायं अपीपरन् अपारयन् समुद्रस्यपारं प्रापितवत्य इत्यर्थः। यथा सत्यस्य बलेनाग्नेये दिव्ये तत्परशुग्रहणादौवन्हिः शीततांयाति एवंसीतायाः पातिव्रत्यधर्ममाहात्म्यात् तद्बंधच्छेदार्थं शिला अपिसमुद्रेतीर्णा इत्यर्थः।

धर्मनावः शिलाइति ब्रह्मवैवर्ते सप्तमाध्याये तृतीयांशेदृष्टं इत्युक्तासाशिलाविप्रैः पातितातज्जले शुभे। चक्रुः शिवकथां पुण्यांकाशिवासिजनैर्वृताः॥ क्षणांतरे गौस्तृषिता सवत्सा समुपागमत् ॥तया पीतं जलं तृप्तासाभवच्छृणु पार्वति॥साशिला मुनिमुख्यानां प्रभावाज्जलमध्यतः ॥ जलोपर्यभवच्छीघ्रं पश्यतांसर्वदेहिनां ॥ यथा तुंबीफलं शुष्कं गच्छतीतस्ततो जले ॥ तथा लघुतराजातातस्याधर्मस्य

सम्यक्सम्यंचोमाहिषा अहेषतसिंधोरूर्मावधिवेनाअवीवियन् ॥
मधोर्धाराभिर्जनयंतोअर्कमित्प्रियामिंद्रस्यतन्वमवीवृधन् ॥ १५० ॥

गौरवमिति ॥ १४९ ॥ वस्वादिरूपेण सर्वान्वानरान्स्तुवंति ॥ सम्यगिति ॥ सम्यंचः सुगतयः सम्यक् चारु अहेषत अवर्द्धतमहिषामहांतोवानराः तएवसिंधोः समुद्रस्य ऊर्मौ एकदेशे शतयोजनविस्तीर्णे वेनाः शोभमानाः अधिउपरिअवीवृधन् क्षिप्तवंतः सत्यस्यनावः शिलारूपाइत्यनुकृष्यतेमधोः आदित्यस्य असौ वा आदित्योयदेतन्मध्विति च्छांदोग्यश्रुतेः। धाराभिः रोहिताद्यमृतपंचकधाराभिः वसवोरुद्रा आदित्याविश्वेदेवामरुत इति पंचगणाः अर्कं अर्कतुल्यमात्मा

 नमेवजनयंतः उपासनाबलेनाविष्कुर्वतः इत् एव इंद्रस्य रामस्यप्रियांतन्वं तनुंसीतां अवीवृ 
 धन् वर्द्धितवंतः रावणागारे निरुद्धां सीतां जयशब्दैराल्हादयन्नित्यर्थः ॥ १६० ॥ अत्राबीविय-
न्नेत्येतद्विवृणोति॥पवित्रवंत इति॥ यथा पवित्रवंतः अध्वर्यवः वाचंपर्यासते विध्यर्थं कृष्णमनुतिष्ठंति
एषां पिताभृतिदानेन पालयिता यजमानः व्रतं यज्ञं फलं अभिरक्षति सर्वस्वीकृत्यास्ते एवं यत्प्रयु

**पवित्रवंतः परिवाचमासतेपितैषां प्रत्नो अभिरक्षतिव्रतं ॥**
**महःसमुद्रं वरुणस्तिरो दधे धीराइच्छे कुर्धरुणेष्वारभं ॥ १६१ ॥**

क्तावानराः सेतुंचक्रुः स महो महान् वरुणो वरणीयःरामःसमुद्रं तिरोदधे शिलाभिराच्छादितवान् धी
राश्चवानराः धरुणेषु भूमिधरणसमर्थेषु धरणेषु पर्वतेषु आरभितुं स्पर्शमेवशेकुः कर्तुमितिशेषः
नतुतान्वोढुं सलिलेवातारयितुंशेकुरितिभावः । यथोक्तमभियुक्तैः।ये मज्जंति निमज्जयंति च परांस्ते प्र 
स्तरादुस्तरे बार्द्धौवीरतरंति वानरभटान्संतारयंते च वै॥ नैतेग्रावगुणानवारिधिगुणानोवानराणांगुणाः

श्रीमद्दाशरथेः प्रतापमहिमा सोयंसमज्जृंभते इति ॥ १६१॥ अथ प्रतिष्ठास्रवः सर्वत्रनिग्रहानुग्रहकर्त्ता त्वमेवासि अतः स्वस्थानस्थानेवास्मान्पाहीत्याशयेनाहुः। सहस्रधारे इति॥ सहस्रधारे सोमे अभिषवणी येनिमित्ते तेप्रसिद्धाः देवर्षयः समस्वरन् अवश्यंसोमःसोतव्य इति शब्दमकुर्वन् कुत्रदिवोनाके स्वर्गेकर्मभूमौमधुजिह्वाः मधुरभाषिणोहितैषिण इति यावत् असश्चतः सोमाभिषवणंविनागतिहीनान्

सहस्रधारे यत्ते समस्वरन्दिवो नाके मधुजिह्वा असश्चतः ॥
अस्य स्पशा न निमिषंति भूर्णयःपदे पदे पाशिनःसंतिसेतवः॥ १६२॥

त्रवैर्णिकान् प्रतिसमस्वरन्निति योजनाफलितमाह अस्येति अस्यसोमाभिमानिनोविष्णोः समुद्रतीरे धातुः रामस्य स्पशाश्चाराःपदेपदे संतिनचते निमिषंति अत्यंतावहिताः संतीत्यर्थः। अनिमेषणोपलक्षिता देवा एवास्यचारास्तेच भूर्णयः बहुप्रदाः पाशिनः पाशवंतश्चसेतवो बंधनकर्तारश्चत्वमंतर्यामीत्व त्प्रेरिताश्चदेवाः सर्वत्रास्मान्पांत्वित्यर्थः। इतःपरं सूक्तशेषः प्रागेवोपोद्घातेव्याख्यातः ॥ १६२ ॥

एवंस्तुत्वा गतेषु मुनिषुशेषमवतारकृत्यंवन्नस्य मन्ये मिथुनाविवत्री अन्नमभीत्यारोदयन्मुषायन्निति उपो
दूघाते एव किंचिद्व्याख्यातंततोप्यवशिष्टमृषिराह॥अष्टाविति॥यथा लक्ष्मणादयोरामादनन्याः एवं तद्भा
र्याअपि सीतातोऽनन्याःअतस्तासां पुत्राःअदितिशब्दिताद्याःसीतायाएवपुत्राःतेचाष्टौकुशलवादयस्तेचा
दितेः पृथिव्यास्तन्वः शरीरस्य परिउपरिजाताः राजानइतिशेषः। रामादीनांचतुर्णामष्टौ पुत्राअष्टसुस्थ

**अष्टौ पुत्रासो अदितेर्येजातास्तन्व १ स्परि ॥**
**देवां उपप्रैत्सप्तभिः परामार्त्तांडमास्यत् ॥ १९३ ॥**
**सप्तभिःपत्रैरदितिरुपप्रैत्पूर्व्यं युगंप्रजायैमृत्यवे त्वत्पुनर्मार्तांडमाभरत् १९४**

नेषु राजानोजाता इतिरामायणादौ स्पष्टंसाचजगन्माता देवान्द्युलोकंसप्तभिः पुत्रैः सहउपप्रैत्उपगता
तेचगार्हस्थ्यवंतश्चत्वारोवर्णास्त्रय आश्रमाश्चतांश्चपरामार्त्तांडं सूर्यमंडलात्परस्तात् ब्रह्मलोकेआस्यत्
क्षिप्तवती ॥१९३॥ पूर्व्यं युगं ब्रह्मलोकं मृत्यवे मृत्युसंबंधिन्यै प्रजायैमर्त्यान्स्रष्टुंत्वत् एकंस्वांशमा
दाय पुनर्मार्तांडं आभरत् आप्यायितवतीततो वृष्टिद्वारापुनर्भूमौ प्रजावृद्धिंकृतवतीत्यर्थः ॥ १९४ ॥

इतः प्रागेवसीतालक्ष्मणौ स्वविग्रहमुपसंजह्रतुरित्याह ॥ भूमिरिति ॥ भूमिः सीता भूमिं अगात् प्र विवेश माता भूमेस्तोलयिता शिरसाधर्त्ताशेषरूपी लक्ष्मणः मातरंस्वप्रकृतिमनंतं अप्यगात् अपिगतः

भूमिर्भूमिमगान्माता मातरमप्यगात् ॥
भूयास्मपुत्रैःपशुभिर्योनो द्वेष्टि स भिद्यतां ॥ १९५ ॥
नावानक्षोदः प्रदिशःपृथिव्याःस्वस्तिभिरति दुर्गाणिविश्वा ॥
स्वांप्रजांबृहदुक्थोमहित्वावरेऽदधादापरेषु ॥ १९६ ॥

वयंच पुत्रैःपशुभिश्चसंगताभूयास्मयोनोद्वेष्टि रजकादिर्निंदकोवामृत्युर्वा स भिद्यतां नश्यतु ॥१९५॥ उपाधिपक्षपाती मायावी मायाकृतं सर्वमनुचकारेत्याह ॥नावानेति ॥ नावाननौकयायथाक्षोदोमहा रुद्रआक्रम्यते एवं स्वस्तिभिः कल्याणैः पुष्पकादिभिः पृथिव्याः प्रदिशः प्रदेशान् आक्रम्यस्वांप्रजां

विश्वासर्वाणि दुर्गाणि संकटानि अतिपारयित्वाबृहदुक्थो महाकर्मारामः महित्वास्वमाहात्म्येन संततिरूपांप्रजां अवरेषु भूलोकेषु जनरूपां प्रजांपरेषु ब्रह्मलोकेषु यअदधात् एतेनपौरजनपदाना त्मलोकं प्रापयन् महाकारुणिकोरामभद्र एव शरणीकरणीय इति दर्शितं ॥ १९६ ॥ लक्ष्मणा र्यपरतांगिरामिमां लक्ष्मणार्यपुरुषेणदर्शितां ॥ सांगवेदपदवाक्यमानवित्कोपिवीक्ष्यसुमतिः प्रमो दतां ॥ १ ॥ श्रीरामरक्षाव्याख्यानं मंत्ररामायणाभिधं ॥ व्याख्यातं राघवस्तेन प्रीयतां करुणानिधिः ॥ २ ॥ दर्शितः सीतयाद्धार्यं वेदारण्येनिरध्वनि ॥ संतोत्रिपुलयंत्वेनेयास्कभाष्यानुयायिनः ॥ ३ ॥ इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसगोविंदसूरिसूनोः श्रीनीलकंठस्यकृतिः स्वोद्धृतमंत्ररामायणव्याख्या मंत्ररहस्यप्रकाशिकाख्या समाप्तिमगमत् ॥



## पुस्तक मिलनेका ठिकाना.

गंगाविष्णु श्रीकृष्णदास लक्ष्मीवेंकटेश्वर छापखाना मुंबई और कल्याण.

" श्रीकल्पतरु प्रेस " मध्यें छापून प्रसिद्ध केलें.

इदंपुस्तकंश्रीमत्कृष्णदुर्गराजमंडलमंडलेश्वरमहाराजराजश्रीश्रीशार्दूलसिंहश्रीमहारा-
जानुजसकलराज्यलक्ष्मीसमलंकृतश्रीमहाराजराजश्रीजवानसिंहमहाराजाना
मनुज्ञया श्रीवेंकटेश्वरमुद्रालयाध्यक्षश्रीकृष्णदासात्मजगंगाविष्णु
खेमराजपण्यरस्थलस्थकार्यकरश्रीधरतनयकृष्णलालशर्मणा

मुंबय्यां मुद्रयित्वाप्रकाशितम्

मार्फत कवेश्वर जयलाल.

